चौखम्भा राजसेवा ग्रन्थमाला ३३

# अथ श्रीमहागणपतिसहस्रनामस्तोत्रम्

## (नामावलिसहितम्)

चौखम्भा ओरियन्टालिया

वाराणसी दिल्ली

॥ श्रीगणेशाय नमः ॥

# श्रीमहागणपतिसहस्रनामस्तोत्रम्

मुनिरुवाच

कथं नाम्नां सहस्रं तं गणेश उपदिष्टवान् ।
शिवदं तन्ममाचक्ष्व लोकानुग्रहतत्पर ॥ १ ॥

ब्रह्मोवाच

देवः पूर्वं पुरारातिः पुरत्रयजयोद्यमे ।
अनर्चनाद्गणेशस्य जातो विघ्नाकुलः किल ॥ २ ॥

मनसा स विनिर्धार्य ददृशे विघ्नकारणात् ।
महागणपतिं भक्त्या समभ्यर्च्य यथाविधि ॥ ३ ॥

विघ्नप्रशमनोपायमपृच्छदपरिश्रमम् ।
सन्तुष्टः पूजया शम्भोर्महागणपतिः स्वयम् ॥ ४ ॥

सर्वविघ्नप्रशमनं सर्वकामफलप्रदम् ।
ततस्तस्मै स्वयं नाम्नां सहस्रमिदमब्रवीत् ॥ ५ ॥

अस्य श्रीमहागणपतिसहस्रनामस्तोत्रमालामन्त्रस्य । गणेश ऋषिः । महागणपतिर्देवता । नानाविधानि च्छन्दांसि । हुमिति वीजम् । तुङ्गमिति शक्तिः । [illegible]करिति कीलकम् ।

## अथ न्यासादि

गणेश्वरो गणक्रीड इत्यङ्गुष्ठाभ्यां नमः ।
कुमारगुरुरीशान इति तर्जनीभ्यां नमः ॥ १ ॥
ब्रह्माण्डकुम्भश्चिद्व्योमेति मध्यमाभ्यां नमः ।
रक्तो रक्ताम्बरधर इत्यनामिकाभ्यां नमः ॥ २ ॥
सर्वसद्गुरुसंसेव्य इति कनिष्ठिकाभ्यां नमः ।
लुप्तविघ्नः स्वभक्तानामिति करतलकरपृष्ठाभ्यां नमः ॥३॥

## अथ हृदयादिन्यासः

छन्दश्छन्दोद्भव इति हृदयाय नमः ।
निष्कलो निर्मल इति शिरसे स्वाहा ।

विनियोगो हृदयो विघ्नकारणात् ।



सृष्टिस्थितिलयक्रीड इति शिखायै वषट् ।
ज्ञानं विज्ञानमानन्द इति कवचाय हुम् ।
अष्टाङ्गयोगफलभृदिति नेत्रत्रयाय वौषट् ।
अनन्तशक्तिसहित इत्यस्त्राय फट् ।

इति दिग्बन्धः ।

अथ ध्यानम्

गजवदनमचिन्त्यं तीक्ष्णदंष्ट्रं त्रिनेत्रं
बृहदुदरमशेषं भूतिराजं पुराणम् ।



अमरवरसुपूज्यं रक्तवर्णं सुरेशं
पशुपतिसुतमीशं विघ्नराजं नमामि ॥ १ ॥

इति सकलविघ्नविनाशनद्वारा श्रीमहागणपतिप्रसादसिद्ध्यर्थे जपे विनियोगः ।

श्रीगणपतिरुवाच

ॐ गणेश्वरो गणक्रीडो गणनाथो गणाधिपः ।
एकदन्तो वक्रतुण्डो गजवक्त्रो महोदरः ॥ १ ॥
लम्बोदरो धूम्रवर्णो विकटो विघ्ननाशनः ।
सुमुखो दुर्मुखो बुद्धो विघ्नराजो गजाननः ॥ २ ॥
भीमः प्रमोद आमोदः सुरानन्दो मदोत्कटः ।

हेरम्बः शम्बरः शम्भुर्लम्बकर्णो महाबलः ॥ ३ ॥

नन्दनो लम्पटो भीमो मेघनादो गणंजयः ।
विनायको विरूपाक्षो वीरः शूरवरप्रदः ॥ ४ ॥
महागणपतिर्बुद्धिप्रियः क्षिप्रप्रसादनः ।
रुद्रप्रियो गणाध्यक्ष उमापुत्रोऽघनाशनः ॥ ५ ॥
कुमारगुरुरीशानपुत्रो मूषकवाहनः ।
सिद्धिप्रियः सिद्धिपतिः सिद्धः सिद्धिविनायकः ॥ ६ ॥
अविघ्नस्तुम्बरुः सिंहवाहनो मोहिनीप्रियः ।
कटङ्कटो राजपुत्रः - शाकलः संमितोमितः ॥ ७ ॥
कूष्माण्डसामसम्भूतिर्दुर्जयो धूर्जयो जयः ।
भूपतिर्भुवनपतिर्भू[illegible] पतिरव्ययः ॥ ८ ॥

विश्वकर्ता विश्वमुखो विश्वरूपो निधिर्गुणः ।
कविः कवीनामृषभो ब्रह्मण्यो ब्रह्मवित्प्रियः ॥ ९ ॥
ज्येष्ठराजो निधिपतिर्निधिप्रियपतिप्रियः ।
हिरण्मयपुरान्तःस्थः सूर्यमण्डलमध्यगः ॥ १० ॥
कराहतिध्वस्तसिन्धुसलिलः पुष्यदन्तभित् ।
उमाङ्ककेलिकुतुकी मुक्तिदः कुलपावनः ॥ ११ ॥
किरीटी कुण्डली हारी वनमाली मनोमयः ।
वैमुख्यहतदैत्यश्रीः पादगत्या जितक्षितिः ॥ १२ ॥
सद्योजातः स्वर्णमुञ्जमेखली दुर्निमित्तहृत् ।
दुःस्वप्नदुष्टशमनो गुणी नादप्रतिष्ठितः ॥ १३ ॥

सुरूपः सर्वनेत्राधिवासो विभ्राजिनूपुरः ।
पीताम्बरः खण्डरदः खण्डवैशाखसंस्थितः ॥ १४ ॥
चित्राङ्गः श्यामदशनो भालचन्द्रो हविर्भुजः ।
योगाधिपस्तारकस्थः पुरुषो गजकर्णकः ॥ १५ ॥
गणाधिराजो विजयः स्थिरो गजपतिर्ध्वजी ।
देवदेवः स्मरः प्राणदीपको वायुकीलकः ॥ १६ ॥
विपश्चिद्वरदो नादो नादभिन्नमहाचलः ।
वराहरदनो मृत्युञ्जयो व्याघ्राजिनाम्बरः ॥ १७ ॥
इच्छाशक्तिभवो देवत्राता दैत्यविमर्दनः ।



शम्भुवक्त्रोद्भवः शम्भु[illegible] शम्भुहास्यभूः ॥ १८ ॥

शम्भुतेजाः शिवाशोकहारी गौरीसुखावहः ।
उमाङ्गमलजो गौरीतेजोभूः स्वर्धुनीभवः ॥ १९ ॥
मर्त्यकायो महानादो गिरिवर्ष्मा शुभाननः ।
सर्वात्मा सर्वदेवात्मा ब्रह्ममूर्धा ककुप्श्रुतिः ॥ २० ॥
ब्रह्माण्डकुम्भश्चिद्व्योमभालः सत्यशिरोरुहः ।
जगज्जन्मलयोन्मेषनिमेषोऽग्न्यर्कसोमदृक् ॥ २१ ॥
गिरीन्द्रैकरदो धर्मो धर्मिष्ठः सामबृंहितः ।
ग्रहर्क्षदशनो वाणीजिह्वो वासवनासिकः ॥ २२ ॥
भ्रूमध्यसंस्थितकरो ब्रह्मविद्यामदोदकः ।
कुलाचलांसः सोमार्कघण्टको रुद्रशिरोधरः ॥ २३ ॥

नदीनदभुजः सर्पाङ्गुलीकस्तारकानखः ।
व्योमनाभिः श्रीहृदयो मेरुपृष्ठोऽर्णवोदरः ॥ २४ ॥
कुक्षिस्थयक्षगन्धर्वरक्षः किन्नरमानुषः ।
पृथ्वीकटिः सृष्टिलिङ्गः शैलोरुर्दस्रजानुकः ॥ २५ ॥
पातालजङ्घो मुनिपात्कालाङ्गुष्ठस्त्रयीतनुः ।
ज्योतिर्मण्डललाङ्गूलो हृदयालाननिश्चलः ॥ २६ ॥
हृत्पद्मकर्णिकाशाली वियत्केलिसरोवरः ।
सद्भक्तध्याननिगडः पूजावारिनिवारितः ॥ २७ ॥

प्रतापी काश्यपो मन्ता गणको विष्टपी बली ।
यशस्वी धार्मिको [illegible]थमः प्रमथेश्वरः ॥ २८ ॥

चिन्तामणिर्द्वीपपतिः कल्पद्रुमवनालयः ।
रत्नमण्डपमध्यस्थो रत्नसिंहासनाश्रयः ॥ २९ ॥
तीव्राशिरोद्धृतपदो ज्वालिनीमौलिलालितः ।
नन्दानन्दितपीठश्रीर्भोगदो भूषितासनः ॥ ३० ॥
सकामदायिनीपीठः स्फुरदुग्रासनाश्रयः ।
तेजोवतीशिरोरत्नं सत्यानित्यावतंसितः ॥ ३१ ॥
सविघ्ननाशिनीपीठः सर्वशक्त्यम्बुजालयः ।
लिपिपद्मासनाधारो वह्निधामत्रयालयः ॥ ३२ ॥
उन्नतप्रपदो गूढगुल्फः संवृत्तपार्ष्णिकः ।
मीनजङ्घः श्लिष्टजानुः स्थूलोरुः प्रोन्नमत्कटिः ॥ ३३ ॥

निम्ननाभिः स्थूलकुक्षिः पीनवक्षा बृहद्भुजः ।
पीनस्कन्धः कम्बुकण्ठो लम्बोष्ठो लम्बनासिकः ॥ ३४ ॥
भग्नवामरदस्तुङ्गः सव्यदन्तो महाहनुः ।
ह्रस्वनेत्रत्रयः शूर्पकर्णो निबिडमस्तकः ॥ ३५ ॥
स्तबकाकारकुम्भाग्रो रत्नमौलिर्निरङ्कुशः ।
सर्पहारकटीसूत्रः सर्पयज्ञोपवीतवान् ॥ ३६ ॥
सर्पकोटीरकटकः सर्पग्रैवेयकाङ्गदः ।

सर्पकक्षोदराबन्धः सर्पराजोत्तरच्छदः ॥ ३७ ॥
रक्तो रक्ताम्बरधरो रक्तमालाविभूषणः ।

श्वेताश्वेताम्बरधरः श्वेतमालाविभूषणः ।
श्वेतातपत्ररुचिरः श्वेतचामरवीजितः ॥ ३९ ॥
सर्वावयवसम्पूर्णः सर्वलक्षणलक्षितः ।
सर्वाभरणशोभाढ्यः सर्वशोभासमन्वितः ॥ ४० ॥
सर्वमङ्गलमाङ्गल्यः सर्वकारणकारणम् ।
सर्वदेववरः शार्ङ्गी बीजपूरी गदाधरः ॥ ४१ ॥
शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः ।
किरीटी कुण्डली हारी वनमाली शुभाङ्गदः ॥ ४२ ॥
इक्षुचापधरः शूली चक्रपाणिः सरोजभृत् ।
पाशी घृतोत्पलः शाली मञ्जरीभृत् स्वदन्तभृत् ॥ ४३ ॥

कल्पवल्लीधरो विश्वाभयदैककरो वशी ।
अक्षमालाधरो ज्ञानमुद्रावान् मुद्गरायुधः ॥ ४४ ॥
पूर्णपात्री कम्बुधरो विधृताङ्कुशमूलकः ।
करस्थाम्रफलश्चूतकलिकाभृत्कुठारवान् ॥ ४५ ॥
पुष्करस्थः स्वर्णघटीपूर्णरत्नाम्बुवर्षकः ।
भारतीसुन्दरीनाथो विनायकरतिप्रियः ॥ ४६ ॥
महालक्ष्मीप्रियतमः सिद्धलक्ष्मीमनोरमः ।
रमारमेशपूर्वाङ्गो दक्षिणोमामहेश्वरः ॥ ४७ ॥
महीवराहवामाङ्गो रतिकन्दर्पपश्चिमः ।

आमोदमोदजननः सप्रमोदमोदनः ॥ ४८ ॥

संवर्धितमहावृद्धिर्ऋद्धिसिद्धिप्रवर्धनः ।
दन्तसौमुख्यसुमुखः कान्तिकन्दलिताश्रयः ॥ ४९ ॥
मदनावत्याश्रिताङ्घ्रिः कृतवैमुख्यदुर्मुखः ।
विघ्नसंपल्लवः पद्मः सर्वोन्नतमदद्रवः ॥ ५० ॥
विघ्नकृन्निम्नचरणो द्राविणीशक्तिसत्कृतः ।
तीव्राप्रसन्ननयनो ज्वालिनीपालितैकदृक् ॥ ५१ ॥
मोहिनीमोहनो भोगदायिनीकान्तिमण्डनः ।
कामिनीकान्तवक्त्रश्रीस्तेजिन्यधिष्ठितैकदिक् ॥ ५२ ॥
वसुधारामदोन्नादो महाशङ्खनिधिप्रियः ।

नमद्वसुमतीमाली महापद्मनिधिः प्रभुः ॥ ५३ ॥

कल्पवल्लीधरो विश्वाभयदैककरो वशी ।
अक्षमालाधरो ज्ञानमुद्रावान् मुद्गरायुधः ॥ ४४ ॥
पूर्णपात्री कम्बुधरो विधृताङ्कुशमूलकः ।
करस्थाम्रफलश्चूतकलिकाभृत्कुठारवान् ॥ ४५ ॥
पुष्करस्थः स्वर्णघटीपूर्णरत्नाम्बुवर्षकः ।
भारतीसुन्दरीनाथो विनायकरतिप्रियः ॥ ४६ ॥
महालक्ष्मीप्रियतमः सिद्धलक्ष्मीमनोरमः ।
रमारमेशपूर्वाङ्गो दक्षिणोमामहेश्वरः ॥ ४७ ॥
महीवराहवामाङ्गो रतिकन्दर्पपश्चिमः ।

आमोदमोदजननः सप्रमोदप्रमोदनः ॥ ४८ ॥

संवर्धितमहावृद्धिर्ऋद्धिसिद्धिप्रवर्धनः ।
दन्तसौमुख्यसुमुखः कान्तिकन्दलिताश्रयः ॥ ४९ ॥
मदनावत्याश्रिताङ्घ्रिः कृतवैमुख्यदुर्मुखः ।
विघ्नसंपल्लवः पद्मः सर्वोन्नतमदद्रवः ॥ ५० ॥
विघ्नकृन्निम्नचरणो द्राविणीशक्तिसत्कृतः ।
तीव्राप्रसन्ननयनो ज्वालिनीपालितैकदृक् ॥ ५१ ॥
मोहिनीमोहनो भोगदायिनीकान्तिमण्डनः ।
कामिनीकान्तवक्त्रश्रीस्तेजिन्यधिष्ठितैकदिक् ॥ ५२ ॥
वसुधारामदोन्मादो महाशङ्खनिधिप्रियः ।

नमद्वसुमतीमाली महापद्मनिधिः प्रभुः ॥ ५३ ॥

सर्वसद्गुरुसंसेव्यः शोचिष्केशहृदाश्रयः ।
ईशानमूर्धा देवेन्द्रशिखः पवननन्दनः ॥ ५४ ॥
प्रत्युग्रनयनो दिव्यो दिव्यास्त्रशतपर्वधृक् ।
ऐरावतादिसर्वाशावारणो वारणप्रियः ॥ ५५ ॥
वज्राद्यस्त्रपरीवारो गणचण्डसमाश्रयः ।
जयाजयपरिकरो विजयाविजयावहः ॥ ५६ ॥
अजयार्चितपादाब्जो नित्यानन्दवनस्थितः ।
विलासिनीकृतोल्लासः शौण्डी सौन्दर्यमण्डितः ॥ ५७ ॥



अनन्तानन्तसुखदः सुमङ्गलसुमङ्गलः ।

सुभगासंश्रितपदो ललिताललिताश्रयः ।
कामिनीपालनः कामकामिनीकेलिलालितः ॥ ५९ ॥
सरस्वत्याश्रयो गौरीनन्दनः श्रीनिकेतनः ।
गुरुर्गुप्तपदो वाचा सिद्धो वागीश्वरीपतिः ॥ ६० ॥
नलिनीकामुको वामारामो ज्येष्ठामनोरमः ।
रौद्रीमुद्रितपादाब्जो हुंम्बीस्तुजङ्गशक्तिकः ॥ ६१ ॥
विश्वादिजननत्राणः स्वाहाशक्तिः सकीलकः ।
अमृताब्धिकृतावासो मदघूर्णितलोचनः ॥ ६२ ॥
उच्छिष्टोच्छिष्टगणको गणेशो गणनायकः ।

सार्वकालिकसंसिद्धिर्नित्यसेव्यो दिगम्बरः ॥ ६३ ॥

अनपायोऽनन्तदृष्टिरप्रमेयोऽजरामरः ।
अनाविलोऽप्रतिहतिरच्युतोऽमृतमक्षरः ॥ ६४ ॥
अप्रतर्क्योऽक्षयोऽजय्योऽनाधारोऽनामयोऽमलः ।
अमेयसिद्धिरद्वैतमघोरोऽग्निसमाननः ॥ ६५ ॥
अनाकारोऽब्धिभूम्यग्निबलघ्नोऽव्यक्तलक्षणः ।
आधारपीठमाधार आधाराधेयवर्जितः ॥ ६६ ॥
आखुकेतन आशापूरक आखुमहारथः ।
इक्षुसागरमध्यस्थ इक्षुपायसभक्षकः ॥ ६७ ॥



इक्षुचापातिरेकश्रीरिक्षुचापनिषेवितः ।
इन्द्रगोपसमानश्री [illegible] ॥ ६८ ॥

इन्दीवरदलश्याम इन्दुमण्डलमण्डितः ।
इध्मप्रिय इडाभाग इडावानिन्दिराप्रियः ॥ ६९ ॥
इक्ष्वाकुविघ्नविध्वंसी इतिकर्तव्यतोत्थितः ।
ईशानमौलिरीशान ईशानप्रिय ईतिहा ॥ ७० ॥
ईषणात्रयकल्पान्त ईहामात्रविवर्जितः ।
उपेन्द्र उडुभृन्मौलिरुडुनाथकरप्रियः ॥ ७१ ॥
उन्नतानन उत्तुङ्ग उदारस्त्रिदशाग्रणीः ।
ऊर्जस्वानूष्मलमद ऊहापोहदुरासदः ॥ ७२ ॥
ऋग्यजुःसामनयन ऋद्धिसिद्धिसमर्पकः ।
ऋजुचित्तैकसुलभो ऋणत्रयविमोचनः ॥ ७३ ॥

लुप्तविघ्नस्वभक्तानां लुप्तशक्तिः सुराद्विपत्म् ।
लुप्तश्रीर्विमुखार्चानां लूताविस्फोटनाशनः ॥ ७४ ॥
एकारपीठमध्यस्थ एणपीठकृतासनः ।
एजिताखिलदैत्यश्रीरेधिताखिलसंश्रयः ॥ ७५ ॥
ऐश्वर्यनिधिरैश्वर्यमैहिकामुष्मिकप्रदः ।
ऐरंमदसमोन्मेष ऐरावतसमाननः ॥ ७६ ॥
ओंकारवाच्य ओंकार ओजस्वानोषधीपतिः ।

औदार्यनिधिरौद्धत्यधैर्य औन्नत्यनिःसमः ॥ ७७ ॥
अङ्कुशः सुरनागानामङ्कुशाकारसंस्थितः ।

कमण्डलुधरः कल्पः कपर्दी कलभाननः ।
कर्मसाक्षी कर्मकर्ता कर्माकर्मफलप्रदः ॥ ७९ ॥
कदम्बगोलकाकारः कूष्माण्डगणनायकः ।
कारुण्यदेहः कपिलः कथकः कटिसूत्रभृत् ॥ ८० ॥
खर्वः खड्गप्रियः खड्गः खान्तान्तःस्थः खनिर्मलः ।
खल्वाटशृङ्गनिलयः खट्वाङ्गी खदुरासदः ॥ ८१ ॥
गुणाढ्यो गहनो गद्यो गद्यपद्यसुधार्णवः ।
गद्यगानप्रियो गर्जो गीतगीर्वाणपूर्वजः ॥ ८२ ॥
गुह्याचाररतो गुह्यो गुह्यागमनिरूपितः ।
गुहाशयो गुडाब्धिस्थो गुरुगम्यो गुरुर्गुरुः ॥ ८३ ॥

घण्टाघर्घरिकामाली घटकुम्भो घटोदरः ।
ङकारवाच्यो ङाकारो ङकाराकारशुण्डभृत् ॥ ८४ ॥
चण्डश्चण्डेश्वरश्चण्डी चण्डेशश्चण्डविक्रमः ।
चराचरपिता चिन्तामणिश्चर्वणलालसः ॥ ८५ ॥
छन्दश्छन्दोद्भवश्छन्दो दुर्लक्ष्यश्छन्दविग्रहः ।
जगद्योनिर्जगत्साक्षी जगदीशो जगन्मयः ॥ ८६ ॥
जप्यो जपपरो जाप्यो जिह्वासिंहासनप्रभुः ।
स्रवद्दण्डोल्लसद्दानझङ्कारिभ्रमराकुलः ॥ ८७ ॥

टङ्कारस्फारसंरावष्टङ्कारमणिनूपुरः ।
ठद्वयः पल्लवान्तस्थः सर्वमन्त्रेषु सिद्धिदः ॥ ८८ ॥

डिण्डिमुण्डो डाकिनीशो डामरो डिण्डिमप्रियः ।
ढक्कानिनादमुदिरो ढौङ्को ढुण्ढिविनायकः ॥ ८९ ॥
णकारवाच्यो वागीशो विश्वात्मा विश्वभावनः ।
तत्त्वानां प्रकृतिस्तत्त्वं तत्त्वंपदनिरूपितः ॥ ९० ॥
तारकान्तरसंस्थानस्तारकस्तारकान्तकः ।
स्थाणुः स्थाणुप्रियः स्थाता स्थावरं जङ्गमं जगत् ॥ ९१ ॥
दक्षयज्ञप्रमथनो दाता दानं दमोदयः ।
दयावान्दिव्यविभवो दण्डभृद्दण्डनायकः ॥ ९२ ॥
दन्तप्रभिन्नाभ्रमालो दैत्यवारणदारणः ।

दंष्ट्रालग्नद्वीपघटो देवार्थनृगजाकृतिः ॥ ९३ ॥

धनं धनपतेर्बन्धुर्धनदो धरणीधरः ।
ध्यानैकप्रकटो ध्येयो ध्यानं ध्यानपरायणः ॥ ९४ ॥
ध्वनिप्रकृतिचित्कारो ब्रह्माण्डावलिमेखलः ।
नन्द्यो नन्दिप्रियो नादो नादमध्यप्रतिष्ठितः ॥ ९५ ॥
निष्कलो निर्मलो नित्यो नित्यानित्यो निरामयः ।
परं व्योम परं धाम परमात्मा परं पदम् ॥ ९६ ॥
परात्परः पशुपतिः पशुपाशविमोचनः ।
पूर्णानन्दः परानन्दः पुराणपुरुषोत्तमः ॥ ९७ ॥
पद्मप्रसन्नवदनः प्रणताज्ञाननाशनः ।
प्रमाणप्रत्ययातीतः प्रणतार्तिनिवारणः ॥ ९८ ॥

फणिहस्तः फणिपतिः फूत्कारः फणितप्रियः ।
बाणार्चिताङ्घ्रियुगलो बालकेलिकुतूहली ॥ ९९ ॥
ब्रह्म ब्रह्मार्चितपदो ब्रह्मचारी बृहस्पतिः ।
बृहत्तरो ब्रह्मपरो ब्रह्मण्यो ब्रह्मवित्प्रियः ॥ १०० ॥
भ्रूक्षेपदत्तलक्ष्मीको भर्गो भद्रो भयापहः ।
भगवान् भक्तिसुलभो भूदितो भूतिभूषणः ॥ १०१ ॥
भव्यो भूतालयो भोगदाता भ्रूमध्यगोचरः ।
मन्त्रो मन्त्रपतिर्मन्त्री मदमत्तो मनोमयः ॥ १०२ ॥
मेखलाहीश्वरो मन्दगतिर्मन्दनिभेक्षणः ।

महाबलो महावीर्यो महाप्राणो महामनाः ॥ १०३ ॥

यज्ञो यज्ञपतिर्यज्ञगोप्ता यज्ञफलप्रदः ।
यशस्करो योगगम्यो याज्ञिको याजकप्रियः ॥ १०४ ॥
रसो रसप्रियो रस्यो रञ्जको रावणार्चितः ।
राज्यरक्षाकरो रत्नगर्भो राज्यसुखप्रदः ॥ १०५ ॥
लक्षो लक्षपतिर्लक्ष्यो लयस्थो लड्डुकप्रियः ।
लासप्रियो लास्यपरो लाभकृल्लोकविश्रुतः ॥ १०६ ॥
वरेण्यो वह्निवदनो वन्द्यो वेदान्तगोचरः ।
विकर्ता विश्वतश्चक्षुर्विधाता विश्वतोमुखः ॥ १०७ ॥



वामदेवो विश्वनेता वज्रिवज्रनिवारणः ।

शब्दब्रह्मशमप्राप्यः शम्भुशक्तिर्गणेश्वरः ।
शास्ता शिखाग्रनिलयः शरण्यः शम्बरेश्वरः ॥ १०९ ॥
षड्ऋतुकुसुमस्रग्वी षडाधारः षडक्षरः ।
संसारवैद्यः सर्वज्ञः सर्वभेषजभेषजम् ॥ ११० ॥
सृष्टिस्थितिलयक्रीडः सुरकुञ्जरभेदकः ।
सिन्दूरितमहाकुम्भः सदसद्भक्तिदायकः ॥ १११ ॥
साक्षी समुद्रमथनः स्वयंवेद्यः स्वदक्षिणः ।
स्वतन्त्रः सत्यसंकल्पः सामगानरतः सुखी ॥ ११२ ॥
हंसो हस्तिपिशाचीशो हवनं हव्यकव्यभुक् ।
हव्यं हुतप्रियो हृष्टो हृल्लेखामन्त्रमध्यगः ॥ ११३ ॥

क्षेत्राधिपः क्षमाभर्ता क्षमाक्षमपरायणः ।
क्षिप्रक्षेमकरः क्षेमानन्दः क्षोणीसुरद्रुमः ॥ ११४ ॥
धर्मप्रदोऽर्थदः कामदाता सौभाग्यवर्धनः ।
विद्याप्रदो विभवदो भुक्तिमुक्तिफलप्रदः ॥ ११५ ॥
आभिरूप्यकरो वीरश्रीप्रदो विजयप्रदः ।
सर्ववश्यकरो गर्भदोषहा पुत्रपौत्रदः ॥ ११६ ॥
मेधादः कीर्तिदः शोकहारी दौर्भाग्यनाशनः ।
प्रतिवादिमुखस्तम्भो रुष्टचित्तप्रसादनः ॥ ११७ ॥



पराभिचारशमनो दुःखहा बन्धमोक्षदः ।
[illegible] ॥ ११८ ॥

घटी मुहूर्तः प्रहरो दिवा नक्तमहर्निशम् ।
पक्षो मासस्त्वयनाब्दयुगं कल्पो महालयः ॥११९॥
राशिस्तारा तिथिर्योगो वारः करणसंज्ञकम् ।
लग्नं होरा कालचक्रं मेरुः सप्तर्षयो ध्रुवः ॥१२०॥
राहुर्मन्दः कविर्जीवो बुधो भौमः शशी रविः ।
कालः सृष्टिः स्थितिर्विश्वं स्थावरं जङ्गमं जगत् ॥१२१॥
भूरापोऽग्निर्मरुद्व्योमाहंकृतिः प्रकृतिः पुमान् ।
ब्रह्मा विष्णुः शिवो रुद्र ईशः शक्तिः सदाशिवः ॥१२२॥
त्रिदशाः पितरः सिद्धा यक्षा रक्षांसि किन्नराः ।
सिद्धविद्याधरा भूता मनुष्याः पशवः खगाः ॥१२३॥

समुद्राः सरितः शैला भूतं भव्यं भवोद्भवः ।
साङ्ख्यं पातञ्जलं योगं पुराणानि श्रुतिः स्मृतिः ॥१२४॥
वेदाङ्गानि सदाचारो मीमांसान्यायविस्तरः ।
आयुर्वेदो धनुर्वेदो गान्धर्वं काव्यनाटकम् ॥१२५॥
वैखानसं भागवतं मानुषं पाञ्चरात्रकम् ।
शैवं पाशुपतं कालमूर्खभैरवशासनम् ॥१२६॥
शाक्तं वैनायकं सौरं जैनमार्हतसंहिता ।
सदसद्व्यक्तमव्यक्तं सचेतनमचेतनम् ॥१२७॥
बन्धो मोक्षः सुखं भोगो योगः सत्यमणुर्महान् ।

ज्ञानं विज्ञानमानन्दो बोधः संवित्समः शमः ।
एक एकाक्षराधार एकाक्षरपरायणः ॥ १२९ ॥
एकाग्रधीरेकवीर एकोऽनेकस्वरूपधृक् ।
द्विरूपो द्विभुजो द्व्यक्षो द्विरदो द्वीपरक्षकः ॥ १३० ॥
द्वैमातुरो द्विवदनो द्वन्द्वहीनो द्वयातिगः ।
त्रिधामा त्रिकरस्त्रेता त्रिवर्गफलदायकः ॥ १३१ ॥
त्रिगुणात्मा त्रिलोकादिस्त्रिशक्तीशस्त्रिलोचनः ।
चतुर्विधवचोवृत्तिः परिवृत्तिः प्रवर्तकः ॥ १३२ ॥
चतुर्मुखमयोपायश्चतुर्वर्णाश्रमाश्रयः ।

चतुर्थीपूजनप्रीतश्चतुर्थीतिथिसम्भवः ॥ १३३ ॥

चतुर्बाहुश्चतुर्दन्तश्चतुरात्मा चतुर्भुजः ।
पञ्चाक्षरात्मा पञ्चात्मा पञ्चास्यः पञ्चकृत्तमः ॥ १३४ ॥
पञ्चाधारः पञ्चवर्णः पञ्चाक्षरपरायणः ।
पञ्चतालः पञ्चकरः पञ्चप्रणवमातृकः ॥ १३५ ॥
पञ्चब्रह्ममयस्फूर्तिः पञ्चावरणवारितः ।
पञ्चभक्ष्यप्रियः पञ्चबाणः पञ्चशिखात्मकः ॥ १३६ ॥
षट्कोणपीठः षट्चक्रधामा षड्ग्रन्थिभेदकः ।



षडङ्गध्वान्तविध्वंसी षडङ्गुलमहाह्रदः ॥ १३७ ॥
षण्मुखः षण्मुखभ्राता षट्शक्तिपरिवारितः ।

षट्तर्कदूरः षट्कर्मा षड्गुणः षड्रसाश्रयः ।
सप्तपातालचरणः सप्तद्वीपोरुमण्डलः ॥ १३९ ॥
सप्तस्वर्लोकमुकुटः सप्तसप्तिवरप्रदः ।
सप्ताङ्गराज्यसुखदः सप्तर्षिगणवन्दितः ॥ १४० ॥
सप्तच्छन्दोनिधिः सप्तहोत्रः सप्तस्वराश्रयः ।
सप्ताब्धिकेलिकासारः सप्तमातृनिषेवितः ॥ १४१ ॥
सप्तच्छन्दो मोदमदः सप्तच्छन्दो मखप्रभुः ।
अष्टमूर्तिर्ध्येयमूर्तिरष्टप्रकृतिकारणम् ॥ १४२ ॥
अष्टाङ्गयोगफलभृदष्टपत्राम्बुजासनः ।

अष्टशक्तिसमानश्रीरष्टैश्वर्यप्रवर्धनः ॥ १४३ ॥

नदीनदभुजः सर्वाङ्गुलिकसत्तारकामसः ।



अष्टपीठोपपीठश्रीरष्टमातृसमावृतः ।
अष्टभैरवसेव्योऽष्टवसुवन्द्योऽष्टमूर्तिभृत् ॥ १४४ ॥

अष्टचक्रस्फुरन्मूर्तिरष्टद्रव्यहविःप्रियः ।
अष्टश्रीरष्टसामश्रीरष्टैश्वर्यप्रदायकः ।
नवनागासनाध्यासी नवनिध्यनुशासितः ॥ १४५ ॥

नवद्वारपुरावृत्तो नवद्वारनिकेतनः ।
नवनाथमहानाथो नवनागविभूषितः ॥ १४६ ॥



नवनारायणस्तुत्यो नवदुर्गानिषेवितः ।

दशात्मको दशभुजो दशदिक्पतिवन्दितः ।
दशाध्यायो दशप्राणो दशेन्द्रियनियामकः ॥ १४८ ॥
दशाक्षरमहामन्त्रो दशाशाव्यापिविग्रहः ।
एकादशमहारुद्रैः स्तुतश्चैकादशाक्षरः ॥ १४९ ॥
द्वादशद्विदशाष्टादिदोर्दण्डास्त्रनिकेतनः ।
त्रयोदशभिदाभिन्नो विश्वेदेवाधिदैवतम् ॥ १५० ॥
चतुर्दशेन्द्रवरदश्चतुर्दशमनुप्रभुः ।
चतुर्दशाद्यविद्याढ्यश्चतुर्दशजगत्पतिः ॥ १५१ ॥
सामपञ्चदशः पञ्चदशी शीतांशुनिर्मलः ।

तिथिपञ्चदशाकारस्तिथ्या पञ्चदशार्चितः ॥ १५२ ॥

षोडशाधारनिलयः षोडशस्वरमातृकः ।
षोडशान्तपदावासः षोडशेन्दुकलात्मकः ॥ १५३ ॥
कलासप्तदशी सप्तदशसप्तदशाक्षरः ॥ १५४ ॥
अष्टादशद्वीपपतिरष्टादशपुराणकृत् ।
अष्टादशौषधीसृष्टिरष्टादशविधिः स्मृतः ॥ १५५ ॥
अष्टादशलिपिव्यष्टिसमष्टिज्ञानकोविदः ।
अष्टादशान्नसम्पत्तिरष्टादशविजातिकृत् ।
एकविंशः पुमानेकविंशत्यङ्गुलिपल्लवः ॥ १५६ ॥

चतुर्विंशतितत्त्वात्मा पञ्चविंशाख्यपूरुषः ।

द्वात्रिंशद्भैरवाधीशश्चतुस्त्रिंशन्महाह्रदः ।
षट्त्रिंशत्तत्त्वसंभूतिरष्टात्रिंशत्कलात्मकः ॥ १५८ ॥

पञ्चाशद्विष्णुशक्तीशः पञ्चाशन्मातृकालयः ।
द्विपञ्चाशद्वपुःश्रेणीत्रिषष्ट्यक्षरसंश्रयः ।
पञ्चादशाक्षरश्रेणीपञ्चाशद्रुद्रविग्रहः ॥ १५९ ॥

चतुःषष्टिमहासिद्धियोगिनीवृन्दवन्दितः ।
नमदेकोनपञ्चाशन्मरुद्वर्गनिरर्गलः ॥ १६० ॥

चतुःषष्ट्यर्थनिर्णेता चतुःषष्टिकलानिधिः ।
अष्टषष्टिमहातीर्थक्षेत्रभैरववन्दितः ॥ १६१ ॥

चतुर्नवतिमन्त्रात्मा षण्णवत्यधिकप्रभुः ।
शतानन्दः शतधृतिः शतपत्रायतेक्षणः ॥ १६२ ॥

शतानीकः शतमखः शतधाराबरायुधः ।
सहस्रपत्रनिलयः सहस्रफणिभूषणः ॥ १६३ ॥

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
सहस्रनामसंस्तुत्यः सहस्राक्षबलापहः ॥ १६४ ॥

दससाहस्रफणिभृत्फणिराजकृतासनः ।

अष्टाशीतिसहस्राद्यमहर्षिस्तोत्रपाठितः ॥ १६५ ॥

चतुर्लक्षजपप्रीतश्चतुर्लक्षप्रकाशकः ॥ १६६ ॥

चतुरशीतिलक्षाणां जीवानां देहसंस्थितः ।
कोटिसूर्यप्रतीकाशः कोटिचन्द्रांशुनिर्मलः ॥ १६७ ॥

शिवोद्भवाद्यष्टकोटिवैनायकधुरन्धरः ।
सप्तकोटिमहामन्त्रमन्त्रितावयवद्युतिः ॥ १६८ ॥

त्रयस्त्रिंशत्कोटिसुरश्रेणीप्रणतपादुकः ।
अनन्तदेवतासेव्यो ह्यनन्तशुभदायकः ॥ १६९ ॥

अनन्तनामानन्तश्रीरनन्तोऽनन्तसौख्यदः ।

अनन्तशक्तिसहितो ह्यनन्तमुनिसंस्तुत इति ॥ १७० ॥

इति वैनायकं नाम्नां सहस्रमिदमीरितम् ।
इदं ब्राह्मे मुहूर्ते यः पठति प्रत्यहं नरः ॥ १७१ ॥

करस्थं तस्य सकलमैहिकामुष्मिकं सुखम् ।
आयुरारोग्यमैश्वर्यं धैर्यं शौर्यं बलं यशः ॥ १७२ ॥

मेधा प्रज्ञा धृतिः कान्तिः सौभाग्यमभिरूपता ।
सत्यं दया क्षमा शान्तिर्दाक्षिण्यं धर्मशीलता ॥ १७३ ॥


जगत्संवननं विश्वसंवादो वेदपाटवम् ।
सभापाण्डित्यमौदार्यं गाम्भीर्यं ब्रह्मवर्चसम् ॥ १७४ ॥

ज्ञानं विज्ञानमास्तिक्यं स्थैर्यं विश्वासता तथा ॥ १७५ ॥

धनधान्यादिवृद्धिश्च सकृदस्य जपाद्भवेत् ।
वश्यं चतुर्विधं विश्वं जपादस्य प्रजायते ॥ १७६ ॥

राज्ञो राजकलत्रस्य राजपुत्रस्य मन्त्रिणः ।
जप्यते यस्य वश्यार्थे स दासस्तस्य जायते ॥ १७७ ॥

धर्मार्थकाममोक्षाणामनायासेन साधनम् ।
शाकिनीडाकिनीरक्षोयक्षग्रहभयापहम् ॥ १७८ ॥

साम्राज्यसुखदं सर्वपत्नमदमर्दनम् ।

समस्तकलहध्वंसि दग्धबीजप्ररोहणम् ॥ १७९ ॥

दुःखस्वप्नशमनं क्रुद्धस्वामिचित्तप्रसादनम् ।
षड्वर्गाष्टमहासिद्धित्रिकालज्ञानकारणम् ॥ १८० ॥

परकृत्यप्रशमनं परचक्रप्रमर्दनम् ।
संग्राममार्गे सर्वेषामिदमेकं जयावहम् ॥ १८१ ॥

सर्ववन्ध्यत्वदोषघ्नं गर्भरक्षैककारणम् ।
पठ्यते प्रत्यहं यत्र स्तोत्रं गणपतेरिदम् ॥ १८२ ॥

देशे तत्र न दुर्भिक्षमीतयो दुरितानि च ।
न तद्गेहं जहाति श्रीर्यत्रायं जप्यते स्तवः ॥ १८३ ॥



क्षयकुष्ठप्रमेहार्शोभगन्दरविषूचिकाः ।

गुल्मप्लीहानवल्मीकमतिसारं महोदरम् ॥ १८४ ॥

कासं श्वासमुदावर्तं शूलं शोफामयोदरम् ।
शिरोरोगं वमिं हिक्कां गण्डमालामरोचकम् ॥ १८५ ॥

वातपित्तकफद्वन्द्वत्रिदोषजनितज्वरम् ।
आगन्तुविषमं शीतमुष्णं चैकाहिकादिकम् ॥ १८६ ॥

इत्याद्युक्तमनुक्तं वा रोगदोषादिसम्भवम् ।
सर्वं प्रशमयत्याशु स्तोत्रस्यास्य सकृज्जपः ॥ १८७ ॥

प्राप्यतेऽस्य जपात्सिद्धिः स्त्रीशूद्रैः पतितैरपि ।

सहस्रनाममन्त्रोऽयं जपितव्यः शुभाप्तये ॥१८८॥

महागणपतेः स्तोत्रं सकामः प्रजपन्निदम् ।
इच्छया सकलान् भोगानुपभुज्येह पार्थिवान् ॥१८९॥

मनोरथफलैर्दिव्यैर्व्योमयानैर्मनोरमैः ।
चन्द्रेन्द्रभास्करोपेन्द्रब्रह्मशर्वादिसद्मसु ॥१९०॥

कामरूपः कामगतिः कामदः कामदेश्वरः ।
भुक्त्वा यथेप्सितान्भोगानभीष्टैः सह बन्धुभिः ॥१९१॥

गणेशानुचरो भूत्वा गणो गणपतिप्रियः ।

नन्दीश्वरादिसानन्दैर्नन्दितः सकलैर्गणैः ॥ १९२॥

शिवभक्तः पूर्णकामो गणेश्वरवरात्पुनः ॥१९३॥
जातिस्मरो धर्मपरः सार्वभौमोऽभिजायते ।
निष्कामस्तु जपन्नित्यं भक्त्या विघ्नेशतत्परः ॥१९४॥
योगसिद्धिं परां प्राप्य ज्ञानवैराग्यसंयुतः ।
निरन्तरे निराबाधे परमानन्दसंज्ञिते ॥१९५॥
विश्वोत्तीर्णे परे पूर्णे पुनरावृत्तिवर्जिते ।
लीनो वैनायके धाम्नि रमते नित्यनिर्वृते ॥१९६॥

यो नामभिर्हुतैर्दत्तैः पूजयेदर्चयेन्नरः ।



राजानो वश्यतां यान्ति रिपवो यान्ति दासताम् ॥१९७॥

तस्य सिध्यति मन्त्राणां दुर्लभाश्चेष्टसिद्धयः ।
मूलमन्त्रादपि स्तोत्रमिदं प्रियतमं मम ॥१९८॥
नभस्ये मासि शुक्लायां चतुर्थ्यां मम जन्मनि ।
दूर्वाभिर्नामभिः पूजां तर्पणं विधिवच्चरेत् ॥१९९॥
अष्टद्रव्यैर्विशेषेण कुर्याद्भक्तिसुसंयतः ।
तस्येप्सितं धनं धान्यमैश्वर्यं विजयो यशः ॥२००॥
भविष्यति न संदेहः पुत्रपौत्रादिकं सुखम् ।
इदं प्रजल्पितं स्तोत्रं पठितं श्रावितं श्रुतम् ॥२०१॥

व्याकृतं चर्चितं ध्यातं विमृष्टमभिवन्दितम् ।

स्वच्छन्दचारिणाप्येषो येन सन्धार्यते स्तवः ।
स रक्ष्यते शिवोद्भूतैर्गणैरध्यष्टकोटिभिः ॥२०३॥
लिखितं पुस्तकस्तोत्रं मन्त्रभूतं प्रपूजयेत् ।
तत्र सर्वोत्तमा लक्ष्मीः सन्निधत्ते निरन्तरम् ॥२०४॥
दानैरशेषैरखिलैर्व्रतैश्च तीर्थैरशेषैरखिलैर्मखैश्च ।
न तत्फलं विन्दति यद्गणेशसहस्रनामस्मरणेन सद्यः ॥२०५॥
एतन्नाम्नां सहस्रं पठति दिनमणौ प्रत्यहं प्रोज्जिहाने
सायं मध्यंदिने वा त्रिषवणमथवा सन्ततं वा जनो यः ।
स स्यादैश्वर्यधुर्यः प्रभवति वचसां कीर्तिमुच्चैस्तनोति
दारिद्र्यं हन्ति विश्वं वशयति सुचिरं वर्धते पुत्रपौत्रैः ॥२०६॥

महानिदभजः सपाङ्गलोकस्तारकामुखः ।



अकिञ्चनोऽप्येकचित्तो नियतो नियतासनः ।
प्रजपंश्चतुरो मासान् गणेशार्चनतत्परः ॥२१७॥
दरिद्रतां समुन्मूल्य सप्तजन्मानुगामपि ।
लभते महतीं लक्ष्मीमित्याज्ञा परमेश्वरी ॥२१८॥
आयुष्यं वीतरोगं कुलमतिविमलं सम्पदश्चार्तिनाशः
कीर्तिर्नित्यावदाता भवति खलु नवा कान्तिरव्याजभव्या ।
पुत्राः सन्तः कलत्रं गुणवदभिमतं यद्यदन्यच्च तत्तन्

नित्यं यः स्तोत्रमेतत् पठति गणपतेस्तस्य हस्ते समस्तम् ॥
गणञ्जयो गणपतिर्हेरम्बो धरणीधरः ।

अमोघसिद्धिरमृतमन्त्रश्चिन्तामणिर्निधिः ।
सुमङ्गलो बीजमाशापूरको वरदः कलः ॥ २२१ ॥
काश्यपो नन्दन वाचा सिद्धो ढौण्ढिर्विनायकः ।
मोदकैरेभिरत्रैकविंशत्या नामभिः पुमान् ॥ २२२ ॥
उपायनं ददेद्भक्त्या मत्प्रसादं चिकीर्षति ।
वत्सरं विघ्नराजोऽस्य तथ्यमिष्टार्थसिद्धये ॥ २२३ ॥
यः स्तौति मद्गतमना ममाराधनतत्परः ।
स्तुतो नाम्ना सहस्रेण तेनाहं नात्र संशयः ॥ २२४ ॥
नमो नमः सुरवरपूजिताङ्घ्रये



नमो नमो निरुपममङ्गलात्मने ।

नमो नमो विपुलदयैकसिद्धये
नमो नमः करिकलभाननाय ते ॥ २२५ ॥

किङ्किणी गणरचितचरणः प्रकटितगुरुमितचारुकरणः ।
मदजललहरीकलितकपोलः शमयतु दुरितं गणपतिर्नृप नाम्ना २२६

इति श्रीगणेशपुराणे उपासनाखण्डे ईश्वरगणेशसंवादे
गणेशसहस्रनामस्तोत्रं सम्पूर्णम् ।

# श्रीमहागणपतिसहस्रनामावलिः ।

ॐ गणेश्वराय नमः ।
ॐ गणक्रीडाय नमः ।
ॐ गणनाथाय नमः ।
ॐ गणाधिपाय नमः ।
ॐ एकदंष्ट्राय नमः ।
ॐ वक्रतुण्डाय नमः ।
ॐ गजवक्त्राय नमः ।
ॐ महोदराय नमः ।

ॐ लम्बोदराय नमः ।
ॐ धूम्रवर्णाय नमः ॥१०॥
ॐ विकटाय नमः ।
ॐ विघ्ननायकाय नमः ।
ॐ सुमुखाय नमः ।
ॐ दुर्मुखाय नमः ।
ॐ बुद्धाय नमः ।
ॐ विघ्नराजाय नमः ।

ॐ गजाननाय नमः ।
ॐ भीमाय नमः ।
ॐ प्रमोदाय नमः ।
ॐ आमोदाय नमः ॥२०॥
ॐ सुरानन्दाय नमः ।
ॐ मदोत्कटाय नमः ।
ॐ हेरम्बाय नमः ।
ॐ शम्बराय नमः ।
ॐ शम्भवे नमः ।
ॐ लम्बकर्णाय नमः ।

ॐ महाबलाय नमः ।
ॐ नन्दनाय नमः ।
ॐ अलम्पटाय नमः ।
ॐ अभीरवे नमः ॥३०॥
ॐ मेघनादाय नमः ।
ॐ गणञ्जयाय नमः ।
ॐ विनायकाय नमः ।
ॐ विरूपाक्षाय नमः ।
ॐ धीरशूराय नमः ।
ॐ वरप्रदाय नमः ।

ॐ महागणपतये नमः ।
ॐ बुद्धिप्रियाय नमः ।
ॐ क्षिप्रप्रसादनाय नमः ।
ॐ रुद्रप्रियाय नमः ॥४०॥
ॐ गणाध्यक्षाय नमः ।
ॐ उमापुत्राय नमः ।
ॐ अघनाशाय नमः ।
ॐ कुमारगुरवे नमः ।
ॐ ईशानपुत्राय नमः ।
ॐ मूषकवाहनाय नमः ।
ॐ सिद्धिप्रियाय नमः ।
ॐ सिद्धिपतये नमः ।
ॐ सिद्धाय नमः ।
ॐ सिद्धिविनायकाय नमः ५०
ॐ अविघ्नाय नमः ।
ॐ तुम्बुरवे नमः ।
ॐ सिंहवाहनाय नमः ।
ॐ मोहिनीप्रियाय नमः ।
ॐ कटंकटाय नमः ।
ॐ राजपुत्राय नमः ।

ॐ शालकाय नमः ।
ॐ सम्मिताय नमः ।
ॐ अमिताय नमः ।
ॐ कूष्मांण्डसामसंभूतये नमः ६०
ॐ दुर्जयाय नमः ।
ॐ धूर्जयाय नमः ।
ॐ जयाय नमः ।
ॐ भूपतये नमः ।
ॐ भुवनपतये ः... ।
ॐ भूतानां पतये नमः ।

ॐ अव्ययाय नमः ।
ॐ विश्वकर्त्रे नमः ।
ॐ विश्वमुखाय नमः ।
ॐ विश्वरूपाय नमः ॥७०॥
ॐ निधये नमः ।
ॐ घृणये नमः ।
ॐ कवये नमः ।
ॐ कवीनामृषभाय नमः ।
ॐ ब्रह्मण्याय नमः ।
ॐ ब्रह्मणस्पतये नमः ।

ॐ ज्येष्ठराजाय नमः ।
ॐ निधिपतये नमः ।
ॐ निधिप्रियपतिप्रियाय नमः ।
ॐ हिरण्मयपुरान्तःस्थाय नमः ।
ॐ सूर्यमण्डलमध्यगाय नमः ।
ॐ कराहतिध्वस्तसिन्धु-
सलिलाय नमः ।
ॐ पूषदन्तभिदे नमः ।
ॐ उमाङ्ककेलिकुतुकिने नमः ।
ॐ मुक्तिदाय नमः ।
ॐ कुलपालनाय नमः ।
ॐ किरीटिने नमः ।
ॐ कुण्डलिने नमः ।
ॐ हारिणे नमः ।
ॐ वनमालिने नमः ॥९०॥
ॐ मनोमयाय नमः ।
ॐ वैमुख्यहतदैत्यश्रिये नमः ।
ॐ पादाहतिजितक्षितये नमः ।
ॐ सद्योजातस्वर्णमुञ्ज-
मेखलिने नमः ।

ॐ दुर्निमित्तहृते नमः ।
ॐ दुस्स्वप्नहृते नमः ।
ॐ प्रसहनाय नमः ।
ॐ गुणिने नमः ।
ॐ नादप्रतिष्ठिताय नमः ।
ॐ सुरूपाय नमः ॥१००॥
ॐ सर्वनेत्राधिवासाय नमः ।
ॐ वीरासनाश्रयाय नमः ।
ॐ पीताम्बराय नमः ।
ॐ खण्डरदाय नमः ।

ॐ खण्डेन्दुकृतशेखराय नमः ।
ॐ चित्राङ्कश्यामदशनाय नमः
ॐ फालचन्द्राय नमः ।
ॐ चतुर्भुजाय नमः ।
ॐ योगाधिपाय नमः ।
ॐ तारकस्थाय नमः ॥११०॥
ॐ पुरुषाय नमः ।
ॐ गजकर्णकाय नमः ।
ॐ गणाधिराजाय नमः ।
ॐ विजयस्थिराय नमः ।

ॐ गजपतिध्वजिने नमः ।
ॐ देवदेवाय नमः ।
ॐ स्मरणप्राणदीपकाय नमः ।
ॐ वायुकीलकाय नमः ।
ॐ विपश्चिद्वरदाय नमः ।
ॐ नादोन्नादभिन्नवलाहकाय नमः ॥१२०॥
ॐ वराहरदनाय नमः ।
ॐ मृत्युञ्जयाय नमः ।
ॐ व्याघ्राजिनाम्बराय नमः ।
ॐ इच्छाशक्तिधराय नमः ।
ॐ देवत्रात्रे नमः ।
ॐ दैत्यविमर्दनाय नमः ।
ॐ शम्भुवक्त्रोद्भवाय नमः ।
ॐ शम्भुकोपघ्ने नमः ।
ॐ शम्भुहास्यभुवे नमः ।
ॐ शम्भुतेजसे नमः ॥१३०॥
ॐ शिवाशोकहारिणे नमः ।
ॐ गौरीसुखावहाय नमः ।
ॐ उमाङ्गमलजाय नमः ।

ॐ गौरीतेजोभुवे नमः ।
ॐ स्वर्धुनीभवाय नमः ।
ॐ यज्ञकायाय नमः ।
ॐ महानादाय नमः ।
ॐ गिरिवर्ष्मणे नमः ।
ॐ शुभाननाय नमः ।
ॐ सर्वात्मने नमः ॥ १४०॥
ॐ सर्वदेवात्मने नमः ।
ॐ ब्रह्ममूर्ध्ने नमः ।
ॐ ककुप्छ्रुतये नमः ।

ॐ ब्रह्माण्डकुम्भाय नमः ।
ॐ चिद्व्योमफलाय नमः ।
ॐ सत्यशिरोरुहाय नमः ।
ॐ जगज्जन्मलयोन्मेष-
निमेशाय नमः ।
ॐ अग्न्यर्कशोमदृशे नमः ।
ॐ गिरीन्द्रैकरदाय नमः ।
ॐ धर्माधर्मोष्ठाय ननः ॥१५०॥
ॐ सामबृंहिताय नमः ।
ॐ ग्रहर्क्षदशनाय नमः ।

ॐ वाणीजिह्वाय नमः ।
ॐ वासवनासिकाय नमः ।
ॐ कुलाचलांसाय नमः ।
ॐ सोमार्कघण्टाय नमः ।
ॐ रुद्रशिरोधराय नमः ।
ॐ नदीनदभुजाय नमः ।
ॐ सर्पाङ्गुलीकाय नमः ।
ॐ तारकानखाय नमः ॥१६०॥
ॐ भ्रूमध्यसंस्थितकराय नमः ।
ॐ ब्रह्मविद्यामदोत्कटाय नमः ।

ॐ व्योमनाभये नमः ।
ॐ श्रीहृदयाय नमः ।
ॐ मेरुपृष्ठाय नमः ।
ॐ अर्णवोदराय नमः ।
ॐ कुक्षिस्थयक्षगन्धर्वरक्षः-
किन्नरमानुषाय नमः ।
ॐ पृथ्वीकटये नमः ।
ॐ सृष्टिलिङ्गाय नमः ।
ॐ शैलोरवे नमः ॥१७०॥
ॐ दस्रजानुकाय नमः ।

ॐ पातालजङ्घाय नमः ।
ॐ मुनिपदे नमः ।
ॐ कालाङ्गुष्ठाय नमः ।
ॐ त्रयीतनवे नमः ।
ॐ ज्योतिर्मण्डललाङ्गूलाय नमः
ॐ हृदयालाननिश्चलाय नमः ।
ॐ हृत्पद्मकर्णिकाशालिवियत्केलिसरोवराय नमः ।
ॐ सद्भक्तध्याननिगडाय नमः ।
ॐ पूजावारीनिवारिताय नमः ।
ॐ प्रतापिने नमः ।
ॐ कश्यपसुताय नमः ।
ॐ गणपाय नमः ।
ॐ विष्टपिने नमः ।
ॐ बलिने नमः ।
ॐ यशस्विने नमः ।
ॐ धार्मिकाय नमः ।
ॐ स्वोजसे नमः ।
ॐ प्रथमाय नमः ।
ॐ प्रथमेश्वराय नमः ॥१९०॥

ॐ चिन्तामणिद्वीपपतये नमः ।
ॐ कल्पद्रुमवनालयाय नमः ।
ॐ रत्नमण्डपमध्यस्थाय नमः ।
ॐ रत्नसिंहासनाश्रयाय नमः ।
ॐ तीव्राशिरोधृतपदाय नमः ।
ॐ ज्वालिनीमौलिलालिताय नमः ।
ॐ नन्दानन्दितपीठश्रिये नमः ।
ॐ भोगदाभूषितासनाय नमः ।
ॐ सकामदायिनीपीठाय नमः ।
ॐ स्फुरदुग्रासनाश्रयाय नमः ।
ॐ तेजोवतीशिरोरत्नाय नमः ।
ॐ सत्यानित्यावतंसिताय नमः
ॐ सविघ्ननाशिनीपीठाय नमः
ॐ सर्वशक्त्यम्बुजाश्रयाय नमः
ॐ लिपिपद्मासनाधाराय नमः
ॐ वह्निधामत्रयाश्रयाय नमः ।
ॐ उन्नतप्रपदाय नमः ।
ॐ गूढगुल्फाय नमः ।
ॐ संवृत्तपार्ष्णिकाय नमः ।
ॐ पीनजङ्घाय नमः ॥२१०॥

ॐ श्लिष्टजानवे नमः ।
ॐ स्थूलोरवे नमः ।
ॐ प्रोन्नमत्कटये नमः ।
ॐ निम्ननाभये नमः ।
ॐ स्थूलकुक्षये नमः ।
ॐ पीनवक्षसे नमः ।
ॐ बृहद्भुजाय नमः ।
ॐ पीनस्कन्धाय नमः ।
ॐ कम्बुकण्ठाय नमः ।
ॐ लम्बोष्ठाय नमः ॥२२०॥
ॐ लम्बनासिकाय नमः ।
ॐ भग्नवामरदाय नमः ।
ॐ तुङ्गसव्यदन्ताय नमः ।
ॐ महाहनवे नमः ।
ॐ ह्रस्वनेत्रत्रयाय नमः ।
ॐ शूर्पकर्णाय नमः ।
ॐ निबिडमस्तकाय नमः ।
ॐ स्तबकाकारकुम्भाग्राय नमः ।
ॐ रत्नमौलये नमः ।
ॐ निरङ्कुशाय नमः ॥२३०॥

ॐ सर्पहारकटीसूत्राय नमः ।
ॐ सर्पयज्ञोपवीतवते नमः ।
ॐ सर्पकोटीरकटकाय नमः ।
ॐ सर्पग्रैवेयकाङ्गदाय नमः ।
ॐ सर्पकक्षोदराबन्धाय नमः ।
ॐ सर्पराजोत्तरीयकाय नमः ।
ॐ रक्ताय नमः ।
ॐ रक्ताम्बरधराय नमः ।
ॐ रक्तमाल्यविभूषणाय नमः ।
ॐ रक्तेक्षणाय नमः ॥२४०॥

ॐ रक्तकराय नमः ।
ॐ रक्तताल्वोष्ठपल्लवाय नमः ।
ॐ श्वेताय नमः ।
ॐ श्वेताम्बरधराय नमः ।
ॐ श्वेतमाल्यविभूषणाय नमः ।
ॐ श्वेतातपत्ररुचिराय नमः ।
ॐ श्वेतचामरवीजिताय नमः ।
ॐ सर्वावयवसम्पूर्णसर्व-
लक्षणलक्षिताय नमः ।
ॐ सर्वाभरणशोभाढ्याय नमः ।

ॐ सर्वशोभासमन्विताय नमः ॥ २५० ॥
ॐ सर्वमङ्गलमाङ्गल्याय नमः ।
ॐ सर्वकारणकारणाय नमः ।
ॐ सर्वदैककराय नमः ।
ॐ शार्ङ्गिणे नमः ।
ॐ वीजापूरिणे नमः ।
ॐ गदाधराय नमः ।
ॐ इक्षुचापधराय नमः ।
ॐ शूलिने नमः ।
ॐ चक्रपाणये नमः ।
ॐ सरोजभृते नमः ॥२६०॥
ॐ पाशिने नमः ।
ॐ धृतोत्पलाय नमः ।
ॐ शालिमञ्जरीभृते नमः ।
ॐ स्वदन्तभृते नमः ।
ॐ कल्पवल्लीधराय नमः ।
ॐ विश्वाभयदैककराय नमः ।
ॐ वशिने नमः ।
ॐ अक्षमालाधराय नमः ।

ॐ ज्ञानमुद्रावते नमः ।
ॐ मुद्गरायुधाय नमः ॥२७०॥
ॐ पूर्णपात्रिणे नमः ।
ॐ कम्बुधराय नमः ।
ॐ विधृतालिसमुद्गकाय नमः ।
ॐ मातुलुङ्गधराय नमः ।
ॐ चूतकलिकाभृते नमः ।
ॐ कुठारवते नमः ।
ॐ पुष्करस्थस्वर्णघटीपूर्ण-
रत्नाभिवर्षकाय नमः ।

ॐ भारतीसुन्दरीनाथाय नमः ।
ॐ विनायकरतिप्रियाय न.
ॐ महालक्ष्मीप्रियतमाय नमः ।
ॐ सिद्धलक्ष्मीमनोरमाय नमः ।
ॐ रमारमेशपूर्वाङ्गाय नमः ।
ॐ दक्षिणोमामहेश्वराय नमः ।
ॐ महीवराहवामाङ्गाय नमः ।
ॐ रतिकन्दर्पपश्चिमाय नमः ।
ॐ आमोदमोदजननाय नमः ।
ॐ समेधितसमृद्धिश्रिये नमः ।

ॐ ऋद्धिसिद्धिप्रवर्तकाय नमः ।
ॐ दत्तसौमुख्यसुमुखाय नमः ।
ॐ कान्तिकन्दलिताश्रयाय नमः
ॐ मदनावत्याश्रिताङ्घ्रये नमः
ॐ कृत्यदौर्मुख्यदुर्मुखाय नमः
ॐ विघ्नसम्पल्लवोपघ्नाय नमः ।
ॐ सेवोन्निद्रमदद्रवाय नमः ।
ॐ विघ्नकृन्निघ्नचरणाय नमः ।
ॐ द्राविणीशक्तिसत्कृताय नमः
ॐ ज्वालिनीपालनैकदृशे नमः ।

ॐ मोहिनीमोहनाय नमः ३००
ॐ भोगदायिनीकान्ति-
मण्डिताय नमः ।
ॐ कामिनीकान्तवक्त्रश्रिये नमः
ॐ अधिष्ठितवसुन्धराय नमः ।
ॐ वसुधारामदोन्नद्धमहाशङ्ख-
निधिप्रभवे नमः ।
ॐ नमद्वसुमतीमौलिमहापद्म-
निधिप्रभवे नमः ।
ॐ सर्वसद्गुरुसंसेव्याय नमः ।

ॐ शोचिष्केशहृदाश्रयाय नमः ।
ॐ ईशानमूर्ध्ने नमः ।
ॐ देवेन्द्रशिखायै नमः ।
ॐ पवननन्दनाय नमः ॥३१०॥
ॐ अग्रप्रत्यग्रनयनाय नमः ।
ॐ दिव्यास्त्राणां प्रयोगविदे नमः
ॐ ऐरावतादिसर्वाशावारणा-
वरणप्रियाय नमः ।
ॐ वज्राद्यस्त्रपरीवाराय नमः ।
ॐ गणचण्डसमाश्रयाय नमः ।
ॐ जयाजयपरीवाराय नमः ।
ॐ विजयाविजयावहाय नमः ।
ॐ अजितार्चितपादाब्जाय नमः
ॐ नित्यानित्यावतंसिताय नमः
ॐ विलासिनीकृतोल्लासाय नमः
ॐ शौण्डीसौन्दर्यमण्डिताय नमः
ॐ अनन्तानन्तसुखदाय नमः ।
ॐ सुमङ्गलसुमङ्गलाय नमः ।
ॐ इच्छाशक्तिज्ञानशक्तिक्रिया-
शक्तिनिषेविताय नमः ।

ॐ सुभगासंश्रितपदाय नमः ।
ॐ ललिताललिताश्रयाय नमः ।
ॐ कामिनीकामनाय नमः ।
ॐ काममालिनीकेलि-
लालिताय नमः ।
ॐ सरस्वत्याश्रयाय नमः ।
ॐ गौरीनन्दनाय नमः ॥३३०॥
ॐ श्रीनिकेतनाय नमः ।
ॐ गुरुगुप्तपदाय नमः ।
ॐ वाचासिद्धाय नमः ।

ॐ वागीश्वरीपतये नमः ।
ॐ नलिनीकामुकाय नमः ।
ॐ वामारामाय नमः ।
ॐ ज्येष्ठामनोरमाय नमः ।
ॐ रौद्रीमुद्रितपादाब्जाय नमः ।
ॐ हुम्बीजाय नमः ।
ॐ तुङ्गशक्तिकाय नमः ॥३४०॥
ॐ विश्वादिजननत्राणाय नमः ।
ॐ स्वाहाशक्तये नमः ।
ॐ सकीलकाय नमः ।

ॐ अमृताब्धिकृतावासाय नमः
ॐ मदघूर्णितलोचनाय नमः ।
ॐ उच्छिष्टगणाय नमः ।
ॐ उच्छिष्टगणेशाय नमः ।
ॐ गणनायकाय नमः ।
ॐ सार्वकालिकसंसिद्धये नमः ।
ॐ नित्यशैवाय नमः ॥३५०॥
ॐ दिगम्बराय नमः ।
ॐ अनपायाय नमः ।
ॐ अनन्तदृष्टये नमः ।

ॐ अप्रमेयाय नमः ।
ॐ अजरामराय नमः ।
ॐ अनाविलाय नमः ।
ॐ अप्रतिरथाय नमः ।
ॐ अच्युताय नमः ।
ॐ अमृताय नमः ।
ॐ अक्षराय नमः । ॥३६०॥
ॐ अप्रतर्क्याय नमः ।
ॐ अक्षयाय नमः ।
ॐ अजय्याय नमः ।

ॐ अनाधाराय नमः ।
ॐ अनामयाय नमः ।
ॐ अमलाय नमः ।
ॐ अमोघसिद्धये नमः ।
ॐ अद्वैताय नमः ।
ॐ अघोराय नमः ।
ॐ अप्रमिताननाय नमः ॥३७०॥
ॐ अनाकराय नमः ।
ॐ अखि[illegible]ाय नमः ।
ॐ अव्यक्तलक्षणाय नमः ।
ॐ आधारपीठाय नमः ।
ॐ आधाराय नमः ।
ॐ आधाराधेयवर्जिताय नमः ।
ॐ आखुकेतनाय नमः ।
ॐ आशापूरकाय नमः ।
ॐ आखुमहारथाय नमः ।
ॐ इक्षुसागरमध्यस्थाय नमः ।
ॐ इक्षुभक्षणलालसाय नमः ।
ॐ इक्षुचापातिरेकश्रिये नमः ।
ॐ इक्षुचापनिषेविताय नमः ।

ॐ इन्द्रगोपसमानश्रिये नमः ।
ॐ इन्द्रनीलसमद्युतये नमः ।
ॐ इन्दीवरदलश्यामाय नमः ।
ॐ इन्दुमण्डलनिर्मलाय नमः ।
ॐ इध्मप्रियाय नमः ।
ॐ इडाभागाय नमः ।
ॐ इराधाम्ने नमः ॥३९०॥
ॐ इन्दिराप्रियाय नमः ।
ॐ इक्ष्वाकुविघ्नविध्वंसिने नमः ।
ॐ इतिकर्तव्यतेप्सिताय नमः ।
ॐ ईशानमौलये नमः ।
ॐ ईशानाय नमः ।
ॐ ईशानसुताय नमः ।
ॐ ईतिघ्ने नमः ।
ॐ ईषणात्रयकल्पान्ताय नमः ।
ॐ ईहामात्रविवर्जिताय नमः ।
ॐ उपेन्द्राय नमः ॥४००॥
ॐ उडुभृन्मौलये नमः ।
ॐ उण्डेरकबलिप्रियाय नमः ।
ॐ उन्नताननाय नमः ।

ॐ उत्तुङ्गाय नमः ।
ॐ उदारत्रिदशाग्रण्ये नमः ।
ॐ ऊर्जस्वते नमः ।
ॐ ऊष्मलमदाय नमः ।
ॐ ऊहापोहदुरासदाय नमः ।
ॐ ऋग्यजुस्सामसम्भूतये नमः ।
ॐ ऋद्धिसिद्धिप्रवर्तकाय नमः ।
ॐ ऋजुचित्तैकसुलभाय नमः ।
ॐ ऋणत्रयविमोचकाय नमः ।
ॐ स्वभक्तानां लुप्तविघ्नाय नमः ।

ॐ सुरद्विषां लुप्तशक्तये नमः ।
ॐ विमुखार्चानां लुप्तश्रिये नमः ।
ॐ लूताविस्फोटनाशनाय नमः ।
ॐ एकारपीठमध्यस्थाय नमः ।
ॐ एकपादकृतासनाय नमः ।
ॐ एजिताखिलदैत्यश्रिये नमः ।
ॐ एधिताखिलसंश्रयाय नमः ।
ॐ ऐश्वर्यनिधये नमः ।
ॐ ऐश्वर्याय नमः ।
ॐ ऐहिकामुष्मिकप्रदाय नमः ।

ॐ ऐरंमदसमोन्मेषाय नमः ।
ॐ ऐरावतनिभाननाय नमः ।
ॐ ओङ्कारवाच्याय नमः ।
ॐ ओङ्काराय नमः ।
ॐ ओजस्वते नमः ।
ॐ ओषधीपतये नमः ।
ॐ औदार्यनिधये नमः ॥४३०॥
ॐ औद्धत्यधुर्याय नमः ।
ॐ औन्नत्यनिस्वनाय नमः ।
ॐ सुरनागानामङ्कुशाय नमः ।
ॐ सुरविद्विषामङ्कुशाय नमः ।
ॐ अःसमस्तविसर्गान्तपदेषु परिकीर्तिताय नमः ।
ॐ कमण्डलुधराय नमः ।
ॐ कल्पाय नमः ।
ॐ कपर्दिने नमः ।
ॐ कलभाननाय नमः ।
ॐ कर्मसाक्षिणे नमः ॥४४०॥
ॐ कर्मकर्त्रे नमः ।
ॐ कर्माकर्मफलप्रदाय नमः ।

ॐ कदम्बगोलकाकाराय नमः।
ॐ कूष्माण्डगणनायकाय नमः
ॐ कारुण्यदेहाय नमः।
ॐ कपिलाय नमः।
ॐ कथकाय नमः।
ॐ कटिसूत्रभृते नमः।
ॐ खर्वाय नमः।
ॐ खड्गप्रियाय नमः ॥४५०॥
ॐ खड्गखान्तान्तस्थाय नमः।
ॐ खनिर्मलाय नमः।
ॐ खल्वाटशृङ्गनिलयाय नमः।
ॐ खट्वाङ्गिने नमः।
ॐ खदुरासदाय नमः।
ॐ गुणाढ्याय नमः।
ॐ गहनाय नमः।
ॐ गस्थाय नमः।
ॐ गद्यपद्यसुधार्णवाय नमः।
ॐ गद्यगानप्रियाय नमः ४६०
ॐ गर्जाय नमः।
ॐ गीतगीर्वाणपूर्वजाय नमः।

ॐ गुह्याचाररताय नमः ।
ॐ गुह्याय नमः ।
ॐ गुह्यागमनिरुपिताय नमः ।
ॐ गुहाशयाय नमः ।
ॐ गुहाब्धिस्थाय नमः ।
ॐ गुरुगम्याय नमः ।
ॐ गुरोर्गुरवे नमः ।
ॐ घण्टाघर्घरिकामालिनेः नमः
ॐ घटकुम्भाय नमः ।
ॐ घटोदराय नमः ।
ॐ चण्डाय नमः ।
ॐ चण्डेश्वरसुहृदे नमः ।
ॐ चण्डीशाय नमः ।
ॐ चण्डविक्रमाय नमः ।
ॐ चराचरपतये नमः ।
ॐ चिन्तामणिचर्व्रणलालसाय नमः ।
ॐ छन्दसे नमः ।
ॐ छन्दोवपुषे नमः ॥४८०॥
ॐ छन्दोदुर्लक्ष्याय नमः ।

ॐ छन्दविग्रहाय नमः ।
ॐ जगद्योनये नमः ।
ॐ जगत्साक्षिणे नमः ।
ॐ जगदीशाय नमः ।
ॐ जगन्मयाय नमः ।
ॐ जपाय नमः ।
ॐ जपपराय नमः ।
ॐ जप्याय नमः ।
ॐ जिह्वासिंहासनप्रभवे नमः ।
ॐ झलज्झल्लोल्लसद्दानझङ्कारि-
भ्रमराकुलाय नमः ।
ॐ टङ्कारस्फारसंरावाय नमः ।
ॐ टङ्कारिमणिनूपुराय नमः ।
ॐ ठद्वयीपल्लवान्तस्थसर्वमन्त्रैक-
सिद्धिदाय नमः ।
ॐ डिण्डिमुण्डाय नमः ।
ॐ डाकिनीशाय नमः ।
ॐ डामराय नमः ।
ॐ डिण्डिमप्रियाय नमः ।
ॐ ढक्कानिनादमुदिताय नमः ।

ॐ ढौकाय नमः ॥५००॥
ॐ ढुण्ढिविनायकाय नमः।
ॐ तत्त्वानां परमाय तत्त्वाय नमः
ॐ तत्त्वंपदनिरूपिताय नमः।
ॐ तारकान्तरसंस्थानाय नमः
ॐ तारकाय नमः।
ॐ तारकान्तकाय नमः।
ॐ स्थाणवे नमः।
ॐ स्थाणुप्रियाय नमः।
ॐ स्थात्रे नमः।
ॐ स्थावराय जङ्गमाय जगते नमः ॥५१०॥
ॐ दक्षयज्ञप्रमथनाय नमः।
ॐ दात्रे नमः।
ॐ दानवमोहनाय नमः।
ॐ दयावते नमः।
ॐ दिव्यविभवाय नमः।
ॐ दण्डभृते नमः।
ॐ दण्डनायकाय नमः।
ॐ दन्तप्रभिन्नाभ्रमालाय नमः

ॐ दैत्यवारणदारणाय नमः ।
ॐ दंष्ट्रालग्नद्विपघटाय नमः ५२०
ॐ देवार्थनृगजाकृतये नमः ।
ॐ धनधान्यपतये नमः ।
ॐ धन्याय नमः ।
ॐ धनदाय नमः ।
ॐ धरणीधराय नमः ।
ॐ ध्यानैकप्रकटाय नमः ।
ॐ ध्येयाय नमः ।
ॐ ध्यानाय नमः ।

ॐ ध्यानपरायणाय नमः ।
ॐ नन्द्याय नमः ॥५३०॥
ॐ नन्दिप्रियाय नमः ।
ॐ नादाय नमः ।
ॐ नादमध्यप्रतिष्ठिताय नमः ।
ॐ निष्कलाय नमः ।
ॐ निर्मलाय नमः ।
ॐ नित्याय नमः ।
ॐ नित्यानित्याय नमः ।
ॐ निरामयाय नमः ।

ॐ परस्मै व्योम्ने नमः ।
ॐ परस्मै धाम्ने नमः ॥५४०॥
ॐ परमात्मने नमः ।
ॐ परस्मै पदाय नमः ।
ॐ परात्पराय नमः ।
ॐ पशुपतये नमः ।
ॐ पशुपाशविमोचकाय नमः ।
ॐ पूर्णानन्दाय नमः ।
ॐ परानन्दाय नमः ।
ॐ पुराणपुरुषोत्तमाय नमः ।
ॐ पद्मप्रसन्ननयनाय नमः ।
ॐ प्रणताज्ञानमोचनाय नमः ।
ॐ प्रमाणप्रत्ययातीताय नमः ।
ॐ प्रणतार्तिनिवारणाय नमः ।
ॐ फलहस्ताय नमः ।
ॐ फणिपतये नमः ।
ॐ फेत्काराय नमः ।
ॐ फाणितप्रियाय नमः ।
ॐ बाणार्चिताङ्घ्रियुगलाय नमः
ॐ बालकेलिकुतूहलिने नमः ।

ॐ ब्रह्मणे नमः ।
ॐ ब्रह्मार्चितपदाय नमः ॥५६०
ॐ ब्रह्मचारिणे नमः ।
ॐ बृहस्पतये नमः ।
ॐ बृहत्तमाय नमः ।
ॐ ब्रह्मपराय नमः ।
ॐ ब्रह्मण्याय नमः ।
ॐ ब्रह्मवित्प्रियाय नमः ।
ॐ बृहन्नादाग्र्यचीत्काराय नमः
ॐ ब्रह्माण्डावलिमेखलाय नमः

ॐ भ्रूक्षेपदत्तलक्ष्मीकाय नमः ।
ॐ भर्गाय नमः । ॥५७०॥
ॐ भद्राय नमः ।
ॐ भयापहाय नमः ।
ॐ भगवते नमः ।
ॐ भक्तिसुलभाय नमः ।
ॐ भूतिदाय नमः ।
ॐ भूतिभूषणाय नमः ।
ॐ भव्याय नमः ।
ॐ भूतालयाय नमः ।

ॐ भोगदात्रे नमः ।
ॐ भ्रूमध्यगोचराय नमः ५८०
ॐ मन्त्राय नमः ।
ॐ मन्त्रपतये नमः ।
ॐ मन्त्रिणे नमः ।
ॐ मदमत्तमनोरमाय नमः ।
ॐ मेखलावते नमः ।
ॐ मन्दगतये नमः ।
ॐ मतिमत्कमलेक्षणाय नमः ।
ॐ महाबलाय नमः ।
ॐ महावीर्याय नमः ।
ॐ महाप्राणाय नमः ॥५९०॥
ॐ महामनसे नमः ।
ॐ यज्ञाय नमः ।
ॐ यज्ञपतये नमः ।
ॐ यज्ञगोप्त्रे नमः ।
ॐ यज्ञफलप्रदाय नमः ।
ॐ यशस्कराय नमः ।
ॐ योगगम्याय नमः ।
ॐ याज्ञिकाय नमः ।

ॐ याजकप्रियाय नमः ।
ॐ रसाय नमः । ॥६००॥
ॐ रसप्रियाय नमः ।
ॐ रस्याय नमः ।
ॐ रञ्जकाय नमः ।
ॐ रावणार्चिताय नमः ।
ॐ रक्षोरक्षाकराय नमः ।
ॐ रत्नगर्भाय नमः ।
ॐ राज्यसुखप्रदाय नमः ।
ॐ लक्ष्याय नमः ।
ॐ लक्ष्यप्रदाय नमः ।
ॐ लक्ष्याय नमः ॥६१०॥
ॐ लयस्थाय नमः ।
ॐ लड्डुकप्रियाय नमः ।
ॐ लानप्रियाय नमः ।
ॐ लास्यपराय नमः ।
ॐ लाभकृल्लोकविश्रुताय नमः ।
ॐ वरेण्याय नमः ।
ॐ वह्निवदनाय नमः ।
ॐ वन्द्याय नमः ।

ॐ वेदान्तगोचराय नमः ।
ॐ विकर्त्रे नमः ॥६२०॥
ॐ विश्वतश्चक्षुषे नमः ।
ॐ विधात्रे नमः ।
ॐ विश्वतोमुखाय नमः ।
ॐ वामदेवाय नमः ।
ॐ विश्वनेत्रे नमः ।
ॐ वज्रिवज्रनिवारणाय नमः ।
ॐ विश्वबन्धनविष्कम्भाधाराय नमः ।
ॐ विश्वेश्वरप्रभवे नमः ।
ॐ शब्दब्रह्मणे नमः ।
ॐ शमप्राप्याय नमः ॥६३०॥
ॐ शम्भुशक्तिगणेश्वराय नमः ।
ॐ शास्त्रे नमः ।
ॐ शिखाग्रनिलयाय नमः ।
ॐ शरण्याय नमः ।
ॐ शिखरीश्वराय नमः ।
ॐ षडृतुकुसुमस्रग्विणे नमः ।
ॐ षडाधाराय नमः ।

ॐ षढक्षराय नमः ।
ॐ संसारवैद्याय नमः ।
ॐ सर्वज्ञाय नमः ॥६४०॥
ॐ सर्वभेषजभेषजाय नमः ।
ॐ सृष्टिस्थितिलयक्रीडाय नमः
ॐ सुरकुञ्जरभेदनाय नमः ।
ॐ सिन्दूरितमहाकुम्भाय नमः
ॐ सदसद्व्यक्तिदायकाय नमः ।
ॐ साक्षिणे नमः ।
ॐ समुद्रमथनाय नमः ।
ॐ स्वसंवेद्याय नमः ।
ॐ स्वदक्षिणाय नमः ।
ॐ स्वतन्त्राय नमः ॥६५०॥
ॐ सत्यसङ्कल्पाय नमः ।
ॐ सामगानरताय नमः ।
ॐ सुखिने नमः ।
ॐ हंसाय नमः ।
ॐ हस्तिपिशाचीशाय नमः ।
ॐ हवनाय नमः ।
ॐ हव्यकव्यभुजे नमः ।

ॐ हव्याय नमः ।
ॐ हुतप्रियाय नमः ।
ॐ हर्षाय नमः ।
ॐ हृल्लेखामन्त्रमध्यगाय नमः ।
ॐ क्षेत्राधिपाय नमः ।
ॐ क्षमाभर्त्रे नमः ।
ॐ क्षमापरपरायणाय नमः ।
ॐ क्षिप्रक्षेमकराय नमः ।
ॐ क्षेमानन्दाय नमः ।
ॐ क्षोणीसुरद्रुमाय नमः ।
ॐ धर्मप्रदाय नमः ।
ॐ अर्थदाय नमः ।
ॐ कामदात्रे नमः ॥६७०॥
ॐ सौभाग्यवर्धनाय नमः ।
ॐ विद्याप्रदाय नमः ।
ॐ विभवदाय नमः ।
ॐ भुक्तिमुक्तिफलप्रदाय नमः ।
ॐ आभिरूप्यकराय नमः ।
ॐ वीरश्रीप्रदाय नमः ।
ॐ विजयप्रदाय नमः ।

ॐ सर्ववश्यकराय नमः ।
ॐ गर्भदोषघ्ने नमः ।
ॐ पुत्रपौत्रदाय नमः ॥६८०॥
ॐ मेधादाय नमः ।
ॐ कीर्तिदाय नमः ।
ॐ शोकहारिणे नमः ।
ॐ दौर्भाग्यनाशनाय नमः ।
ॐ प्रतिवादिमुखस्तम्भाय नमः
ॐ रुष्टचित्तप्रसादनाय नमः ।
ॐ पराभिचारशमनाय नमः ।

ॐ दुःखभञ्जनकारकाय नमः ।
ॐ लवाय नमः ।
ॐ त्रुटये नमः । ॥६९०॥
ॐ कलायै नमः ।
ॐ काष्ठायै नमः ।
ॐ निमेषाय नमः ।
ॐ तत्पराय नमः ।
ॐ क्षणाय नमः ।
ॐ घट्यै नमः ।
ॐ मुहूर्ताय नमः ।

ॐ प्रहराय नमः ।
ॐ दिवा नमः ।
ॐ नक्तं नमः । ॥७००॥
ॐ अहर्निशाय नमः ।
ॐ पक्षाय नमः ।
ॐ मासाय नमः ।
ॐ अयनाय नमः ।
ॐ वर्षाय नमः ।
ॐ युगाय नमः ।
ॐ कल्पाय नमः ।

ॐ महालयाय नमः ।
ॐ राशये नमः ।
ॐ तारायै नमः । ॥७१०॥
ॐ तिथये नमः ।
ॐ योगाय नमः ।
ॐ वाराय नमः ।
ॐ करणाय नमः ।
ॐ अंशकाय नमः ।
ॐ लग्नाय नमः ।
ॐ होरायै नमः ।

ॐ कालचक्राय नमः ।
ॐ मेरवे नमः ।
ॐ सप्तर्षिभ्यो नमः । ॥७२०॥
ॐ ध्रुवाय नमः ।
ॐ राहवे नमः ।
ॐ मन्दाय नमः ।
ॐ कवये नमः ।
ॐ जीवाय नमः ।
ॐ बुधाय नमः ।
ॐ भौमाय नमः ।
ॐ शशिने नमः ।
ॐ रवये नमः ।
ॐ कालाय नमः । ॥७३०॥
ॐ सृष्टये नमः ।
ॐ स्थितये नमः ।
ॐ विश्वस्मै स्थावराय जङ्गमाय नमः ।
ॐ भुवे नमः ।
ॐ अद्भ्यो नमः ।
ॐ अग्नये नमः ।

ॐ मरुते नमः ।
ॐ व्योम्ने नमः ।
ॐ अहङ्कृतये नमः ।
ॐ प्रकृतये नमः ॥७४०॥
ॐ पुंसे नमः ।
ॐ ब्रह्मणे नमः ।
ॐ विष्णवे नमः ।
ॐ शिवाय नमः ।
ॐ रुद्राय नमः ।
ॐ ईशाय नमः ।

ॐ शक्तये नमः ।
ॐ सदाशिवाय नमः ।
ॐ त्रिदशेभ्यो नमः ।
ॐ पितृभ्यो नमः । ॥७५०॥
ॐ सिद्धेभ्यो नमः ।
ॐ यक्षेभ्यो नमः ।
ॐ रक्षोभ्यो नमः ।
ॐ किन्नरेभ्यो नमः ।
ॐ साध्येभ्यो नमः ।
ॐ विद्याधरेभ्यो नमः ।

ॐ भूतेभ्यो नमः ।
ॐ मनुष्येभ्यो नमः ।
ॐ पशुभ्यो नमः ।
ॐ खगेभ्यो नमः । ॥७६०॥
ॐ समुद्रेभ्यो नमः ।
ॐ सरिद्भ्यो नमः ।
ॐ शैलेभ्यो नमः ।
ॐ भूताय नमः ।
ॐ भव्याय नमः ।
ॐ भवोद्भवाय नमः ।
ॐ साङ्ख्याय नमः ।
ॐ पातञ्जलाय नमः ।
ॐ योगाय नमः ।
ॐ पुराणेभ्यो नमः ॥७७०॥
ॐ श्रुत्यै नमः ।
ॐ स्मृत्यै नमः ।
ॐ वेदाङ्गेभ्यो नमः ।
ॐ सदाचाराय नमः ।
ॐ मांसायै नमः ।
ॐ न्यायविस्तराय नमः ।

ॐ आयुर्वेदाय नमः ।
ॐ धनुर्वेदाय नमः ।
ॐ गान्धर्वाय नमः ।
ॐ काव्यनाटकाय नमः ॥७८०
ॐ वैखानसाय नमः ।
ॐ भागवताय नमः ।
ॐ सात्वताय नमः ।
ॐ पाञ्चरात्रकाय नमः ।
ॐ शैवाय नमः ।
ॐ पाशुपताय नमः ।
ॐ कालामुखाय नमः ।
ॐ भैरवशासनाय नमः ।
ॐ शाक्ताय नमः ।
ॐ वैनायकाय नमः ॥७९०॥
ॐ सौराय नमः ।
ॐ जैनाय नमः ।
ॐ अर्हतसंहितायै नमः ।
ॐ सते नमः ।
ॐ असते नमः ।
ॐ व्यक्ताय नमः ।

ॐ अव्यक्ताय नमः ।
ॐ सचेतनाय नमः ।
ॐ अचेतनाय नमः ।
ॐ वन्धाय नमः ॥८००॥
ॐ मोक्षाय नमः ।
ॐ सुखाय नमः ।
ॐ भोगाय नमः ।
ॐ अयोगाय नमः ।
ॐ सत्याय नमः ।
ॐ अणवे नमः ।

ॐ महते नमः ।
ॐ स्वस्ति नमः ।
ॐ हुं नमः ।
ॐ फट् नमः ॥८१०॥
ॐ स्वधा नमः ।
ॐ स्वाहा नमः ।
ॐ श्रौषट् नमः ।
ॐ वौषट् नमः ।
ॐ वषट् नमः ।
ॐ नमो नमः ।

ॐ ज्ञानाय नमः ।
ॐ विज्ञानाय नमः ।
ॐ आनन्दाय नमः ।
ॐ बोधाय नमः ॥८२०॥
ॐ संविदे नमः ।
ॐ शमाय नमः ।
ॐ यमाय नमः ।
ॐ एकस्मै नमः ।
ॐ एकाक्षराधाराय नमः ।
ॐ एकाक्षरपरायणाय नमः ।
ॐ एकाग्रधिये नमः ।
ॐ एकवीराय नमः ।
ॐ एकानेकस्वरूपधृते नमः ।
ॐ द्विरूपाय नमः ॥८३०॥
ॐ द्विभुजाय नमः ।
ॐ द्व्यक्षाय नमः ।
ॐ द्विरदाय नमः ।
ॐ द्वीपरक्षकाय नमः ।
ॐ द्वैमातुराय नमः ।
ॐ द्विवदनाय नमः ।

ॐ द्वन्द्वातीताय नमः ।
ॐ द्वयातिगाय नमः ।
ॐ त्रिधाम्ने नमः ।
ॐ त्रिकराय नमः ॥८४०॥
ॐ त्रेतात्रिवर्गफलदायकाय नमः
ॐ त्रिगुणात्मने नमः ।
ॐ त्रिलोकदये नमः ।
ॐ त्रिशक्तीशाय नमः ।
ॐ त्रिलोचनाय नमः ।
ॐ चतुर्बाहवे नमः ।

ॐ चतुर्दन्ताय नमः ।
ॐ चतुरात्मने नमः ।
ॐ चतुर्मुखाय नमः ।
ॐ चतुर्विधोपायमयाय नमः ।
ॐ चतुर्वर्णाश्रमाश्रयाय नमः ।
ॐ चतुर्विधवचोवृत्तिपरिवृत्ति-
प्रवर्तकाय नमः ।
ॐ चतुर्थीपूजनप्रीताय नमः ।
ॐ चतुर्थीतिथिसम्भवाय नमः।
ॐ पञ्चाक्षरात्मने नमः ।

ॐ पञ्चात्मने नमः ।
ॐ पञ्चास्याय नमः ।
ॐ पञ्चकृत्यकृते नमः ।
ॐ पञ्चाधाराय नमः ।
ॐ पञ्चवर्णाय नमः ॥८६०॥
ॐ पञ्चाक्षरपरायणाय नमः ।
ॐ पञ्चतालाय नमः ।
ॐ पञ्चकराय नमः ।
ॐ पञ्चप्रणवभाविताय नमः ।
ॐ पञ्चब्रह्ममयस्फूर्तये नमः ।
ॐ पञ्चावरणवारिताय नमः ।
ॐ पञ्चभक्ष्यप्रियाय नमः ।
ॐ पञ्चबाणाय नमः ।
ॐ पञ्चशिपात्मकाय नमः ।
ॐ षट्कोणपीठाय नमः ॥८७०॥
ॐ षट्चक्रधाम्ने नमः ।
ॐ षड्ग्रन्थिभेदकाय नमः ।
ॐ षडध्वध्वान्तविध्वंसिने नमः
ॐ षडङ्गुलमहाह्रदाय नमः ।
ॐ षण्मुखाय नमः ।

ॐ षण्मुखभ्रात्रे नमः ।
ॐ षट्शक्तिपरिवारिताय नमः ।
ॐ षड्वैरिवर्गविध्वंसिने नमः ।
ॐ षडूर्मिभयभञ्जनाय नमः ।
ॐ षट्तर्कदूराय नमः ॥८८०॥
ॐ षट्कर्मनिरताय नमः ।
ॐ षड्रसाश्रयाय नमः ।
ॐ सप्तपातालचरणाय नमः ।
ॐ सप्तद्वीपोरुमण्डलाय नमः ।
ॐ सप्तस्वर्लोकमुकुटाय नमः ।

ॐ सप्तसप्तिवरप्रदाय नमः ।
ॐ सप्ताङ्गराज्यसुखदाय नमः ।
ॐ सप्तर्षिगणमण्डिताय नमः ।
ॐ सप्तच्छन्दोनिधये नमः ।
ॐ सप्तहोत्रे नमः ॥८९०॥
ॐ सप्तस्वराश्रयाय नमः ।
ॐ सप्ताब्धिकेलिकासाराय नमः
ॐ सप्तमातृनिषेविताय नमः ।
ॐ सप्तछन्दोमोदमदाय नमः ।
ॐ सप्तच्छन्दोमखप्रभवे नमः ।

ॐ अष्टमूर्तिध्येयमूर्तये नमः ।
ॐ अष्टप्रकृतिकारणाय नमः ।
ॐ अष्टाङ्गयोगफलभुवे नमः ।
ॐ अष्टपत्राम्बुजासनाय नमः ।
ॐ अष्टशक्तिसमृद्धश्रिये नमः ।
ॐ अष्टैश्वर्यप्रदायकाय नमः ।
ॐ अष्टपीठोपपीठश्रिये नमः
ॐ अष्टमातृसमावृत्ताय नमः ।
ॐ अष्टभैरवसेव्याय नमः ।
ॐ अष्टवसुवन्द्याय नमः ।

ॐ अष्टमूर्तिभृते नमः ।
ॐ अष्टचक्रस्फुरन्मूर्तये नमः ।
ॐ अष्टद्रव्यहविःप्रियाय नमः ।
ॐ नवनगासनाध्यासिने नमः ।
ॐ नवनिध्यनुशासित्रे नमः ।
ॐ नवद्वारपुराधाराय नमः ।
ॐ नवाधारनिकेतनाय नमः ।
ॐ नवनारायणस्तुत्याय नमः ।
ॐ नवदुर्गानिषेविताय नमः ।
ॐ नवनाथमहानाथाय नमः ।

ॐ नवनागविभूषणाय नमः ।
ॐ नवरत्नविचित्राङ्गाय नमः ।
ॐ नवशक्तिशिरोधृताय नमः ।
ॐ दशात्मकाय नमः ।
ॐ दशभुजाय नमः ॥९२०॥
ॐ दशदिक्पतिवन्दिताय नमः।
ॐ दशाध्याय नमः ।
ॐ दशप्राणाय नमः ।
ॐ दशेन्द्रियनियामकाय नमः ।
ॐ दशाक्षरमहामन्त्राय नमः ।
ॐ दशाशाव्यापिविग्रहाय नमः
ॐ एकादशादिभी रुद्रै नमः ।
ॐ स्तुताय नमः ।
ॐ एकादशाक्षराय नमः ।
ॐ द्वादशोद्दण्डदोर्दण्डाय नमः ।
ॐ द्वादशान्तनिकेतनाय नमः ।
ॐ त्रयोदशाभिधाभिन्नविश्व-
देवाधिदैवताय नमः ।
ॐ चतुर्दशेन्द्रवरदाय नमः ।
ॐ चतुर्दशमनुप्रभवे नमः ।

ॐ चतुर्दशादिविद्याढ्याय नमः

ॐ चतुर्दशजगत्प्रभवे नमः ।

ॐ सामपञ्चदशाय नमः ।

ॐ पञ्चदशीशीतांशुनिर्मलाय ।

ॐ षोडशाधारनिलयाय नमः ।

ॐ षोडशस्वरमातृकाय नमः ।

ॐ षोडशान्तपदावासाय नमः ।

ॐ षोडशेन्दुकलात्मकाय नमः

ॐ कलायै सप्तदश्यै नमः ।

ॐ सप्तदशाय नमः ।

ॐ सप्तदशाक्षराय नमः ।

ॐ अष्टादशद्वीपपतये नमः ।

ॐ अष्टादशपुराणकृते नमः ।

ॐ अष्टादशौषधीसृष्टये नमः ।

ॐ अष्टादशविधिस्मृताय नमः ।

ॐ अष्टादशलिपिव्यष्टिसमष्टि-
ज्ञानकोविदाय नमः ।

ॐ एकविंशाय पुंसे नमः । ९५०

ॐ एकविंशत्यङ्गुलिपल्लवाय नमः

ॐ चतुर्विंशतितत्त्वात्मने नमः ।

ॐ पञ्चविंशाख्यपूरुषाय नमः ।
ॐ सप्तविंशतितारेशाय नमः ।
ॐ सप्तविंशतियोगकृते नमः ।
ॐ द्वात्रिंशद्भैरवाधीशाय नमः ।
ॐ चतुस्त्रिंशन्महाह्रदाय नमः ।
ॐ षट्त्रिंशत्तत्त्वसम्भूतये नमः ।
ॐ अष्टत्रिंशत्कलातनवे नमः ।
ॐ नमदेकोनपञ्चाशन्मरुद्वर्ग-
निरर्गलाय नमः ॥९६०॥
ॐ पञ्चाशदक्षरश्रेण्यै नमः ।
ॐ पञ्चाशद्रुद्रविग्रहाय नमः ।
ॐ पञ्चाशद्विष्णुशक्तीशाय नमः
ॐ पञ्चाशन्मातृकालयाय नमः
ॐ द्विपञ्चाशद्वपुश्श्रेण्यै नमः ।
ॐ त्रिषष्ट्यक्षरसंश्रयाय नमः ।
ॐ चतुष्षष्ट्यर्णनिर्णेत्रे नमः ।
ॐ चतुष्षष्टिकलानिधये नमः ।
ॐ चतुष्षष्टिमहासिद्धयोगिनी-
वृन्दवन्दिताय नमः ।

ॐ अष्टषष्टिमहातीर्थक्षेत्रभैरव-
भावनाय नमः ॥९७०॥
ॐ चतुर्णवतिमन्त्रात्मने नमः ।
ॐ षण्णवत्यधिकप्रभवे नमः ।
ॐ शतानन्दाय नमः ।
ॐ शतधृतये नमः ।
ॐ शतपत्रायतेक्षणाय नमः ।
ॐ शतानीकाय नमः ।
ॐ शतमखाय नमः ।
ॐ शतधारवरायुधाय नमः ।

ॐ सहस्रपत्रनिलयाय नमः ।
ॐ सहस्रफणभूषणाय नमः ।
ॐ सहस्रशीर्ष्णे पुरुषाय नमः ।
ॐ सहस्राक्षाय नमः ।
ॐ सहस्रपदे नमः ।
ॐ सहस्रनामसंस्तुत्याय नमः ।
ॐ सहस्राक्षबलापहाय नमः ।
ॐ दशसाहस्रफणभृत्फणिराज
कृतासनाय नमः ।

ॐ अष्टाशीतिसहस्राद्यमहर्षि-
स्तोत्रयन्त्रिताय नमः ।
ॐ लक्षाधीशप्रियाधाराय नमः
ॐ लक्षाधारमनोमयाय नमः ।
ॐ चतुर्लक्षजपप्रीताय नमः ।
ॐ चतुर्लक्षप्रकाशिताय नमः ।
ॐ चतुरशीतिलक्षाणां जीवानां
देहसंस्थिताय नमः ।
ॐ कोटिसूर्यप्रतीकाशाय नमः
ॐ कोटिचन्द्रांशुनिर्मलाय नमः

ॐ शिवाभवाध्युष्टकोटि-
विनायकधुरन्धराय नमः
ॐ सप्तकोटिमहामन्त्रमन्त्रिता-
वयवद्युतये नमः ।
ॐ त्रयस्त्रिंशत्कोटिसुरश्रेणी-
प्रणतपादुकाय नमः ।
ॐ अनन्तनाम्ने नमः ।
ॐ अनन्तश्रिये नमः ।
ॐ अनन्तानन्तसौख्यदाय नमः
॥१०००॥

## स्तोत्र-ग्रन्थाः

१ काली-कवचम् । श्रीमहाकालीस्तोत्रम्, कालीशतनामस्तोत्रसहितम् ।

२ सौन्दर्यलहरी । श्रीमच्छङ्करभगवत्पादविरचिता

३ गङ्गालहरी । श्रीपण्डितराजजगन्नाथ विरचिता । अमृतलहरी, गङ्गाष्टकम् सहित

४ महालक्ष्मीस्तोत्रम् । श्रीअगस्ति विरचितम् । विविध छन्दों में महालक्ष्मी के नव स्तोत्रों सहित

५ सिद्धसरस्वतीस्तोत्रम् । श्रीब्रह्मा विरचितम् । विविध छन्दों में सरस्वती के दस स्तोत्रों का संग्रह

६ अन्नपूर्णास्तोत्रम् । श्रीशंकराचार्य विरचितम् । लक्ष्मीलहरी तथा सङ्कटाष्टकम् सहित

७ सन्तानगोपालस्तोत्रम् । लक्ष्मीकेशव-सम्वादे श्री वासुदेव प्रोक्तम् । श्रीकृष्णाष्टकम् सहित

८ अपराजितास्तोत्रम् । श्रीमार्कण्डेय मुनि विरचितम्

९ श्रीसूक्तम् । ( लक्ष्मीसूक्त सहित )

१० ललितासहस्रनामस्तोत्रम् (नामावलिसहितम्) । श्रीब्रह्मपुराणान्तरगतम्

११ वैदिक देवीसूक्तम् । तान्त्रिकं देवीसूक्तम्, अपराधक्षमापनस्तोत्रम् देव्य-पराधक्षमापनस्तोत्रसहितम्
१२ पुरुषसूक्तम् । ( माध्यन्दिन शाखीय ) सान्वय-संस्कृत-व्याख्या 'सरला'-हिन्दीभाषा-सहितम्
१३ शुक्लयजुर्वेदीयसन्ध्योपासनविधिः । ( देवर्षि-पितृतर्पणसहितः )
१४ आलवन्दारस्तोत्रम् । शालिग्रामस्तोत्रम्, रङ्गनाथाष्टकम्, श्रीमदच्युताष्टकम्
१५ कालभैरवाष्टकम् । तीक्ष्णदंष्ट्रकालभैरवाष्टकम्, दण्डपाण्यष्टकसहितम्
१६ देवीपुष्पाञ्जलिस्तोत्रम् । मोहनीकवचसहितम्
१७ गङ्गालहरी । 'सरला' हिन्दी व्याख्या सहिता
१८ श्रीशिवस्तोत्रम् । शिवप्रातःस्मरणम्, शिवकवचम्, शिवमानसपूजा-शिवपञ्चाक्षरस्तोत्रम्, विश्वनाथाष्टकम्, वेदसारशिवस्तवः, श्रीरुद्राष्टकम्, श्रीपशुपत्यष्टकसहितम् ।
१९ श्रीमहागणपतिसहस्रनामस्तोत्रम् । ( नामावली सहित )

प्रकाशक

**चौखम्भा ओरियन्टालिया**

पो० आ० चौखम्भा, पो० बा० नं० १०३२
गोकुल भवन, के० ३७/१०९, गोपाल मन्दिर लेन
वाराणसी-२२१००१ (भारत)
टेलिफोन : ३३३४७६ टेलीग्राम : गोकुलोत्सव

शाखा :

**चौखम्भा ओरियन्टालिया**
बैंग्लो रोड, 9-यू० बी०, जवाहर नगर
निकट किरोड़ीमल कालेज
दिल्ली-110007
फोन : 2911617, 238790



मुद्रक—चारु प्रिन्टर्स, गोलघर, वाराणसी-१